**उसी प्रकार से आवरण और विक्षेप शक्ति विशिष्ट अज्ञान द्वारा समावृत चैतन्य स्वयं प्रधान रूप से प्रपंचविश्व का निमित्त कारण और उपाधिरूप अज्ञानरूप से उपादान कारण होता है।।३८।।**

**तमः प्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाश आकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी चोत्पद्यते । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिश्रुतेः ।।३९।।**

(सं० टी०) एवमीश्वरस्यापि स्वचैतन्यप्रधानतया निमित्तत्वं स्वोपाधिप्रधानतयोपादानत्वं च भवतीत्यर्थः । इदानीं विक्षेपशक्तिकृत्यमाह । तम इति । आकाशादेर्जडत्वात्तमोगुणप्रधानविक्षेमशक्तियुक्ताज्ञानावच्छिन्नचैतन्यस्यैवाकाशादिप्रपंचजनकत्वमितिभावः । अस्मिन्नर्थे श्रुतिं प्रमाणयति । "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इति । एतेनापि सांख्यनैयायिकपक्षौ निरस्तौ । शक्तेरज्ञानस्य शक्तिमत्परतंत्रत्वात्स्वतन्त्रस्य तस्य केवलस्य जडस्याज्ञानस्य जगत्कारणात्वानुपपत्तेः । "ईक्षतेर्नाशब्दम् ।" "रचनानुपपत्तेश्च नानुमानम्" इत्यादिन्यायनिरस्तत्वाच्च । परमाणोरप्युक्तदोषग्रासत्रासानपायात् । अभिन्ननिमित्तोपादानप्रतिपादकश्रुतिस्मृतिन्यायविरोधाच्च । "यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंति । सदेव सौम्येदमग्र आसीत् । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । बीजं मां सर्वभूतानाम्" इत्यादिश्रुतिस्मृतिभिरीश्वरस्यैव जगत्कारणत्वप्रतिपादनात् ।।३९।।

**(भा० टी०) तमोगुणप्रधान विक्षेपशक्ति विशिष्ट अज्ञान से आच्छादित चैतन्य से आकाश उत्पन्न हुई है आकाश से वायु वायु से अग्नि अग्नि से जल जल से पृथिवी उत्पन्न हुई है इसी प्रकार क्रम से प्रपञ्चविश्व उत्पन्न हुआ है श्रुति में भी ऐसा ही लिखा है।।३९।।**

**तेषु जाड्याधिकदर्शनात्तमःप्राधान्यं तत्कारणस्य तदानीं सत्त्वरजस्तमांसि कारणगुणप्रक्रमेण तेष्वाकाशादिषूत्पद्यन्ते । इमान्येव सूक्ष्मभूतानि तन्मात्राण्यपंचीकृतानि चोच्यन्ते । एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते ।।४०।।**

(सं० टी०) नन्वाकाशादिप्रपंचोत्पादकचैतन्यावच्छेदकाज्ञाने कुतः तमःप्राधान्यमित्याशंक्याह । तेष्विति । कारणगुणा हि कार्यगुणानारभत इति न्यायादिति । भावः । ननु त्रिगुणात्मकत्वादज्ञानस्य कथं तमोगुणमात्रप्राधान्येनाकाशादिजनकत्व-

मित्याशंक्याह । तदानीमिति । तदानीमुत्पत्तिवेलायां सत्त्वादयः त्रयोऽपि गुणाः तारतम्येन कारणप्रक्रमन्यायेन तेष्वाकाशादिषु पंचभूतेषूत्तरोत्तराधिक्येन जायंत इत्यर्थः । इमान्येव सूक्ष्मशरीरादिकारणभूतान्यपंचीकृतानि सूक्ष्मरूपतन्मात्राणीत्युच्यंत इत्याह । एतान्येवेति । "पंचप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम्" इति वचनादप्यपंचीकृतभूतेभ्यो पंचीकृतसूक्ष्मशरीराणि पंचीकृतसूक्ष्मशरीराणि पंचीकृतस्थूलभूतानि चोत्पंद्यत इत्याह एतेभ्य इति ॥४०॥

(भा० टी०) उन उत्पन्न आकाशादि में जड़ता का आधिक्य होने से उनका कारण तमोगुण प्रधान मालूम होता है उन आकाशादि की उत्पत्ति के अनन्तर उनके कारण गुणों के तारतम्य के अनुसार सत्त्वगुण रजोगुण और तमोगुण इनकी उत्पत्ति होती है। एवं पूर्वोक्त अवस्था को प्राप्त हुए आकाशादिक सूक्ष्मभूत, महाभूत, पञ्चतन्मात्रा और अपञ्चीकृत कहे जाते हैं इन्हीं सूक्ष्मभूतों से सूक्ष्मशरीर और स्थूलशरीर उत्पन्न होते हैं॥४०॥

**सूक्ष्मशरीराणि सप्तदशावयवानि लिंगशरीराणि । अवयवास्तु ज्ञानेन्द्रियपंचकं बुद्धिमनसी कर्मेन्द्रियपंचकं वायुपंचकं चेति । ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक्क्रमेणोत्पद्यन्ते । बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः । मनो नाम संकल्पविकल्पात्मिकान्तःकरणवृत्तिः ॥४१॥**

(सं० टी०) सूक्ष्मशरीरस्वरूपभूतानवयवानाह । अवयवास्त्विति । ज्ञानेंद्रियाणि श्रोत्रत्वक्चक्षुजिह्वाघ्राणाख्यानि । सात्त्विकांशादाकाशाच्छ्रोत्रमुत्पद्यते सात्त्विकांशाद्वायोः त्वगिंद्रियम् । सात्त्विकांशात्तेजसः चक्षुः । सात्त्विकांशाज्जलज्जिह्वा । सात्त्विकांशायाः पृथिव्याः सकाशात् घ्राणेंद्रियं चेति क्रमेणोत्पद्यंत इत्याह । एतानीति । बुद्धेर्लक्षणमाह । बुद्धिरिति । ब्रह्मैवाहमिति निश्चयात्मिकैवान्तःकरणवृत्तिरेव बुद्धिरित्यर्थः । मनसो लक्षणमाह । मनोनामेति । अयं चिद्रूपो देहो वेति संशयात्मिकांतःकरणवृत्तिरेव मन इत्यर्थः ॥४१॥

(भा० टी०) सूक्ष्मशरीर दिखलाते हैं। सप्तदश १७ अवयवयुक्त लिङ्गशरीर को सूक्ष्मशरीर कहते हैं। पञ्च ज्ञानेन्द्रिय पंच कर्मेंद्रिय पञ्च वायु मन और बुद्धि यह सप्तदश १७ अवयव कहलाते हैं। नेत्र कर्ण नासिका जिहवा और त्वचा यह पांच अवयव ही पञ्च ज्ञानेन्द्रिय कहाते हैं। यह ज्ञानेंद्रिय आकाशादि के सात्त्विक अंश से

उत्पन्न होती है। तेज के सात्विक अंश से नेत्र आकाश के सात्त्विकअंश से कर्ण पृथ्वी के सात्त्विक अंश से नासिका जल के सात्त्विक अंश से जिव्हा वायु के सात्त्विक अंश से त्वचा उत्पन्न होती है। निश्चयात्मक अंतःकरण की वृत्ति का नाम बुद्धि है। संकल्पविकल्पात्मक अन्तःकरण की वृत्ति का मन है॥४१॥

**अनयोरेव चित्ताहंकारयोरन्तर्भावः । अनुसंधानात्मिकांतःकरणवृत्तिश्चित्तम् । अभिमानात्मिकान्तःकरणवृत्तिरहंकारः । एते पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्य उत्पद्यंते । एतेषां प्रकाशात्मकत्वात्सात्त्विकांशकार्यत्वम् ॥४२॥**

(सं० टी०) स्मरणात्मकचित्तस्य गर्वात्मकाहंकारस्य च बुद्धिमनसोरंतर्भाव इत्याह । अनयोरेवेति । यद्यप्यंतःकरणत्वेन चतुर्णामेकत्वं तथाप्येकस्यैव पुरुषस्य पाचकः पाठक इत्यादिवृत्तिभेदाद्भेदवदेकस्याप्यंतःकरणस्य निश्चयसंशयस्मरणाहंकारविषयभेदैर्बुद्ध्यादिभेद इत्यर्थः । बुद्ध्यादीनामुत्पत्तिप्रकारं दर्शयति । एते पुनरिति । एतेषां चतुर्ण्णां सात्त्विकांशेभ्यो भूतेभ्य उत्पत्तौ निमित्तमाह । एतेषामिति। बुद्ध्यादीनां प्रकाशात्मकत्वासात्विकांशभूतकार्यत्वमित्यर्थः ॥४२॥

**(भा० टी०) चित्त और अहंकार यह दोनों बुद्धि और मन के अन्तर्गत दो प्रकार की वृत्ति है अनुसंधानात्मक अंतःकरण की वृत्ति का नाम चित्त है। और अभिमान सहित जो चित्त की वृत्ति है उसका नाम अहंकार है। बुद्धि और मन यह दोनों मिलाकर आकाशादि पञ्चभूत के सात्विक अंश से उत्पन्न होते हैं। पञ्च ज्ञानेन्द्रिय बुद्धि और मन यह सब स्वप्रकाशक स्वभाव है। इसी कारण इनका पञ्चभूत के सात्त्विक अंश से उत्पन्न होना अनुमान किया जाता है॥४२॥**

**इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता सती विज्ञानमयकोशो भवति । अयं कर्तृत्वभोक्तृत्वाभिमानित्वेनइहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते ॥४३॥**

(सं० टी०) बुद्धेर्विज्ञानमयकोशत्वं दर्शयति । इयमिति । बुद्धेः सत्त्वकार्यत्वाज्ज्ञानेंद्रियसाहित्येन प्रकाशाधिक्याद्विज्ञानमयत्वम् आत्माच्छादकत्वाच्च कोशत्वमित्यर्थः । विशुद्धबुद्धिप्रतिबिंबितचिदात्मनो जीवत्वं दर्शयति । अयमिति तप्तायःपिण्डवद्बुद्ध्यारोपितं चैतन्यं वस्तुतो कर्तृभोक्तृनित्यानंदापरिच्छिन्नमक्रियमपि भोक्तृत्वकर्तृत्वसुखित्वदुःखित्वपरिच्छिन्नत्वक्रियावत्त्वाद्यभिमानेन स्वर्गादिलोकांतरगामित्वं व्यावहारिकजीवत्वं च लभते इत्यर्थः ॥४३॥

**(भा० टी०) संपूर्ण ज्ञानेंद्रियों के सहित मिलकर बुद्धि को विज्ञानमयकोष कहते**

हैं। यही विज्ञानमयकोश मैं कर्त्ता हूं मैं भोक्ता हूं मैं सुखी हूं मैं दुःखी हूं इत्यादि अभिमानयुक्त इस लोक में रहने वाला और परलोक में जानेवाला, इस प्रकार व्यवहार से इसको जीव कहते हैं।।४३।।

**मनस्तु कर्म्मेन्द्रियैः सहितं सन्मनोमयकोशो भवति । कर्म्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि एतानि पुनराकाशादीनां रजोंशेभ्यो व्यस्तेभ्यः पृथक्क्रमेणोत्पद्यन्ते ।।४४।।**

(सं० टी०) मनोमयकोशत्वं निरूपयति । मनस्त्विति । सत्त्वगुणप्रधानं मनः सत्त्वगुणांशेभ्यो जातेः श्रोत्रादिज्ञानेन्द्रियैरेव सहितं सन्मनोमयकोश इत्यर्थः । अत्र तु मनसः सत्त्वोपहितरजोविकारेच्छारूपत्वात्संकल्पविकल्पात्मकत्वेन बुद्ध्यपेक्षया जाड्याधिक्यात् मनोमयत्वम् आत्माच्छादकत्वात्कोशत्वमिति भावः । कर्मेन्द्रियाण्युपदिशति । कर्मेन्द्रियाणीति । एतेषामुत्पत्तौ स धनापेक्षायामाह । एतानि पुनरिति । भूतानां त्रिगुणत्वेऽपि रजोगुणबहुलेभ्यो व्यस्तभूतेभ्यो वागादीनि पृथक्पृथक् क्रमेणोत्पद्यंते ।भूतानां त्रिगुणत्वेऽपि रजोगुणप्रधानादाकाशात् वागिन्द्रियमुत्पद्यते रजोगुणप्रधानाद्वायोः पाणीन्द्रियं रजोगुणप्रधानादग्नेः पादेन्द्रियं रजोगुणप्रधानाज्जलात् शिश्नेंद्रियं रजोगुणप्रधानायाः पृथिव्याः पाय्विंद्रियमुत्पद्यत इत्यर्थः ।।४४।।

(भा० टी०) पांच कर्मेन्द्रियों के सहित मिलकर मनोमयकोश कहाता है, वाक् पाणि पाद पायु और उपस्थ इन पांच अवयवों का नाम कर्मेन्द्रिय है यही पांच कर्मेन्द्रिय आकाशादि पंचमहाभूतों के राजस अंश से उत्पन्न होती हैं। आकाश के रजोभाग से वाक् वायु के रजोभाग से पाणि जल के रजोभाग से पाद तेज के रजोभाग से वायु पृथ्वी के रजोभाग से उपस्थ उत्पन्न होते हैं।।४४।।

**वायवः प्राणापानव्यानोदानसमानाः । प्राणोनाम प्राग्गमनवान् नासाग्रस्थानवर्ती । अपानो नाम अवाग्गमनवान् पाय्वादिस्थानवर्ती । व्यानोनाम विष्वग्गमनवानखिलशरीरवर्ती । उदानः कण्ठस्थानीयः ऊर्द्ध्वगमनवानुत्क्रमणवायुः । समानः शरीरमध्यगताशितपीतान्नादिसमीकरणकरः । समीकरणन्तु-परिपाककरण-रसरुधिरशुक्रपुरीषादिकरणम् ।।४५।।**

(सं० टी०) वायूनुद्दिशति । वायव इति । यथोद्देशं प्रमाणमाह । प्राणोनामेति । ऊर्ध्वगमनशीलो नासाग्रस्थायी वायुः प्राण इत्यर्थः । अपानस्य लक्षणमाह । अपानो

नामेति । अधोगमनशील: पाय्वादिस्थायी वायुरपान इत्यर्थ: । व्यानस्य लक्षणमाह । व्यानो नामेति । सर्वनाडीगमनशीलोऽखिलशरीरस्थायी वायुर्व्यान इत्यर्थ: । उदानस्य लक्षणमाह । उदानोनामेति । ऊर्ध्वमुत्क्रमणशील: कंठस्थायी वायुरुदान इत्यर्थ: । समानस्य लक्षणमाह । समानोनामेति । शरीरमध्यगतोऽन्नरसादिनेता वायु: समान इत्यर्थ: । प्राणादीनां वायुत्वेन रूपेणैकत्वेऽपि क्रियाभेदेन भेद इत्यर्थ: ॥४५॥

**(भा० टी०) प्राण, अपान, व्यान, उदान और समान इनको पञ्च वायु कहते हैं ऊपर को चलने वाले नासिका के अग्रभाग में रहने वाले वायु का नाम प्राणवायु है। नीचे को चलने वाले गुदास्थान में रहने वाले वायु को अपानवायु कहते हैं। सब नाड़ियों में चलने वाले सब शरीर में रहने वाले वायु को व्यान कहते हैं। ऊपर को चलने वाले कण्ठस्थान में रहने वाले वायु को उदान कहते है। और भोजन किये हुए अन्न के और पान किये हुए जलादि के समीकरण करने वाले वायु को समान वायु कहते हैं। परिपाक क्रियाद्वारा भोजन करी हुई वस्तु का रुधिर वीर्य और पुरीषादि करने का नाम समीकरण है।।४५।।**

**केचित्तु नागकूर्म्मकृकलदेवदत्तधनञ्जयाख्या: पंचान्ये वायव: सन्तीत्याहु: । तत्र नाग: उद्गिरणकर: । कूर्म: निमिलनादिकर: । कृकल:क्षुधाकर: । देवदत्त: जृम्भण-कर: । धनञ्जय:पोषणकर: । एतेषां प्राणादिष्वन्त-र्भावात्प्राणादय: पंचैवेति केचित् । इदं प्राणादिपंचकं आकाशादिगतरजोंशेभ्यो मिलितेभ्य उत्पद्यते ॥४६॥**

(सं० टी०) कपिलमतानुसारिण: क्रियाभेदेनान्येऽपि पंच वायव: संतीति वदंतीत्याह । केचित्त्विति । तेषामेव नामानि निर्दिशति-नागेत्यादिना । नागेति । वेदांतिनस्तु नागादीनां प्राणादिष्वंतर्भावं वदंतीत्याह । एतेषां प्राणादिष्विति । प्राणादिवायूनामुत्पत्तौ कारणापेक्षायामाह एतदिति । अपंचीकृतपंचमहाभूतेभ्यो रज:प्रधानेभ्य: प्राणादयो जायन्त इत्यर्थ: ॥४६॥

**(भा० टी०) सांख्यमतावलम्बी तो ऐसा कहते हैं कि नाग, कूर्म, कृकल, देवदत्त, धनञ्जय यह और भी पांच वायु हैं उद्गिरण कराने वाले वायु को नाग कहते हैं। जिस वायु से नेत्र मिच जायें वह कूर्मवायु कहाता है। जिस वायु से क्षुधा लगे उसको कृकल कहते हैं। जृम्भा कराने वाले वायु को देवदत्त कहते हैं। जिस वायु से पुष्टि होती है उसको धनञ्जय कहते हैं। परंतु वेदांतमत के आचार्य केवल प्राणादि पांच वायु ही मानते हैं। और अलग कोई वायु नहीं मानते हैं वे प्राणादि पञ्चवायु में**

नागादि वायु का अन्तर्भाव मानते हैं। यह प्राणादि पंच वायु मिले हुए आकाशादि पञ्चभूत के राजसअंश से उत्पन्न होते हैं।।४६।।

**इदं प्राणादिपंचकं कर्मेन्द्रियसहितं सत् प्राणमयकोशो भवति। अस्य क्रियात्मकत्वेन रजोंशकार्य्यत्वम्। एतेषु कोशेषु मध्ये विज्ञानमयो ज्ञानशक्तिमान् कर्तृरूपः। मनोमयः इच्छाशक्तिमान् करणरूपः। प्राणमयः क्रियाशक्तिमान् कार्यरूपः। योग्यत्वादेवमेतेषांविभागः इति वर्णयन्ति। एतत्कोशत्रयं मिलितं सत् सूक्ष्मशरीरमित्युच्यते ।।४७।।**

(सं० टी०) एतेषां प्राणादीनां प्राणप्रचुरत्वात्प्राणमयत्वम् आत्माच्छादकत्वात्कोशत्वं च भवतीत्याह। इदमिति। प्राणादीनां रजःप्रधानभूतकार्यत्वे निमित्तमाह। अस्येति। प्राणादीनां क्रियात्मकत्वाद्रजःकार्यमित्यर्थः। एतेषु पंचसु कोशेषु मध्ये विज्ञानमयमनोमय प्राणमयकोशानां क्रमेण ज्ञानेच्छाक्रियाशक्तिभेदेन कर्तृकरणक्रियारूपत्वं दर्शयति। एतेष्विति। तत्र हेतुमाह। योग्यत्वादिति। इदमेव कोशत्रयं सूक्ष्मशरीरमिति व्यवह्रियत इत्याह एतदिति ।।४७।।

(भा० टी०) पूर्व कहे हुए प्राणादि पञ्चवायु और कर्मेन्द्रियों का मिलकर प्राणमय कोश होता है, गमन आगमन इत्यादि क्रिया प्राणादि पञ्चवायु का स्वभाव है इसी कारण यह पञ्चवायु संपूर्ण राजसअंशका कार्य मालूम होता है। पूर्व कहे हुए कोशों के मध्य में ज्ञानशक्तियुक्त विज्ञानमय कोश कर्त्ता है इच्छाशक्तियुक्त मनोमयकोश कारण है। क्रियाशक्तियुक्त प्राणमय कोश कार्य है इस प्रकार तीनों कोशों का विभाग वर्णन करते हैं। यह तीनों कोश मिलकर कोश समष्टि का सूक्ष्मशरीर कहलाता है।।४७।।

**अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः। अनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिश्च भवति। एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राण इति चोच्यते सर्वानुस्यूतत्वात्। ज्ञानेच्छाक्रियाशक्तिमद्पंचीकृतपंचमहाभूताभिमानित्वाच्च ।।४८।।**

(सं० टी०) अस्य समष्टित्वे हेतुमाह। अत्रापीति।। एकबुद्ध्येति। चराचरप्राणिमात्रस्ययावंत्यनंतानि सूक्ष्मशरीराणि तेषां सर्वेषां सूक्ष्मशरीराणां

सूत्रात्मनो हिरण्यगर्भाख्येन स्वीयैकबुद्धया विषयीकृतत्वात समष्टित्वमित्यर्थः । तत्र दृष्टांतमाह । वनवदित्यादि । अस्यैव सूक्ष्मशरीरस्य व्यष्टित्वं दर्शयति । अनेकेति अनेकेषां जीवानां प्रत्येकं स्वस्वलिंगशरीरस्य स्वबुद्धिविशेषत्वनानेकबुद्धिविषयतया व्यष्टित्वमित्यर्थः । तत्र दृष्टांतमाह । वृक्षवदित्यादि । उक्तसमष्टयवच्छिन्न-चैतन्यस्य सूत्रात्मत्वादिसंज्ञां दर्शयति । एतदिति । तत्र हेतुमाह । सर्वत्रानुस्यूतत्वा-दिति । सर्वप्राणिलिंगशरीरेष्वनुस्यूतत्वाद्विद्यमानत्वादित्यर्थः हेत्वंतरमाह । ज्ञाने-च्छेति । ज्ञानेच्छाक्रियाशक्तिमत्कोशत्रयोपाध्यवच्छिन्नत्वादित्यर्थः ॥४८॥

**(भा० टी०) जैसे वन और तालाब, वृक्ष और जल का समष्टि है। उसी प्रकार समस्त सूक्ष्मशरीर एकरूप से शरीर समष्टि है इसी प्रकार जैसे वृक्ष और जल, वन और तालाब का व्यष्टि है। उसी प्रकार अनेक रूपद्वारा शरीर व्यष्टि है। इसी सूक्ष्मशरीर का समष्टिरूप उपाधि से उपहित चैतन्य सूत्रात्मा हिरण्यगर्भ और प्राण कहा जाता है। इसी कारण यही चैतन्य वस्त्र में स्थित सूत्र की तरह सब में परिव्याप्त तथा ज्ञान, इच्छा और क्रियाशक्तिविशिष्ट अपञ्चीकृत पञ्चभूत का अभिमानी होता है॥४८॥**

**अस्यैषा समष्टिः स्थूलप्रपंचापेक्षया सूक्ष्मत्वात् सूक्ष्म-शरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात् स्वप्नः । अत एव स्थूलप्रपंचलयस्थानमिति चोच्यते । एतद्व्यष्टयुपहितं चैतन्यं तैजसो भवति तेजोमयान्तः-करणोपहितत्वात् ॥४९॥**

(सं० टी०) विज्ञानमयादिकोशत्रयस्य सूक्ष्मशरीरतां दर्शयति । अस्यैषेति । अस्य सूत्रात्मनो हिरण्यगर्भाख्यस्य विज्ञानमयादिकोशत्रयं शरीरम् अस्य स्थूलप्र-पंचापेक्षया सूक्ष्मत्वादित्यर्थः । अस्येव विज्ञानमयादिकोशत्रयस्य स्वप्नत्वे युक्तिमाह । जाग्रदिति । विराट्स्वरूपेणानुभूतस्थूलप्रपंचविषयवासनामयत्वात्स्वप्नत्वमस्येत्यर्थः। यतः स्वप्नत्वं सूक्ष्मत्वं च । अत एव स्थूलप्रपंचलयस्य स्थानमित्युच्यत इत्यर्थः । विज्ञानमयादिसमष्टयुपाध्यवच्छिन्नचैतन्यस्य हिरण्यगर्भत्वं प्रतिपाद्येदानीं तद्व्यष्टयुपलक्षितचैतन्यस्य तैजसत्वं निरूपयति । एतदिति । अत्र हेतुमाह तेजोमयेति ॥४९॥

**(भा० टी०) हिरण्यगर्भ को उपाधिस्वरूप इसी स्थूलशरीर के समष्टिस्थूल प्रपञ्च से सूक्ष्म होता है। इसी कारण उसको सूक्ष्मशरीर और कोशत्रय कहते हैं। तथा जाग्रत् अवस्था का वासनात्मक हेतु, स्वप्न और स्थूलप्रपञ्च का लयस्थान कहा जाता है। इसी स्थूलशरीर के व्यष्टिरूप उपाधि से उपहित चैतन्य को तैजस कहते हैं। इसी कारण तेजोमय अन्तःकरण उसका उपाधि है॥४९॥**

**अस्यापीयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्मत्वात् सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नः। अत एव स्थूलशरीरलयस्थानमिति चोच्यते। एतौ सूत्रात्मतैजसौ तदानीं सूक्ष्माभिमनोवृत्तिभिः सूक्ष्मविषयाननुभवतः। "प्रविविक्तभुक् तैजसः" इत्यादिश्रुतेः ॥५०॥**

(सं० टी०) व्यष्टिरूपं विज्ञानमयादिकोशत्रयं तैजसस्यापि सूक्ष्मं शरीरमिति दर्शयति। अस्यापीति। सूक्ष्मशरीरत्वे हेतुमाह स्थूलेति। अस्यापि स्वप्नत्वहेतुमाह। जाग्रदिति। विश्वचैतन्येनानुभूतस्थूलशरीरविषयवासनामयत्वातस्वप्नमित्यर्थः। अस्यैव सूक्ष्मशरीरस्य स्थूलशरीरलयस्थानत्वे युक्तिमाह। अत एवेति। यथा पूर्वं प्राज्ञेश्वरावज्ञानवृत्तिभिः सुषुप्त्यवस्थायामानन्दमनुभवतः तथा हिरण्यगर्भतैजसावपि स्वप्नावस्थायां मनोवृत्तिभिर्वासनामयान्। शब्दादिविषयाननुभवत इति दर्शयति। एताविति। अस्मिन्नर्थे श्रुतिमुदाहरति। प्रविविक्तेति। प्रविविक्तं भुक्तम् इति प्रविविक्तभुक् तैजसः तेजोन्तःकरणं कार्यादिभावेन परिणतं तदेव स्थूलशरीरादिहीनं यस्य स तैजसः तेजोन्तःकरणस्वामीत्यर्थः ॥५०॥

**(भा० टी०) पूर्वोक्त तैजसके उपाधिस्वरूप इसी व्यष्टिभूत सूक्ष्मशरीर स्थूलशरीर की अपेक्षा अत्यन्त सूक्ष्म है। इसी कारण उसको सूक्ष्मशरीर और कोशत्रय कहते हैं यह सूक्ष्म शरीर वासनामय है इसको स्वप्न और स्थूलशरीर का लयस्थान कहते है सुषुप्ति अवस्था में यही हिरण्यगर्भ और तैजस दोनों सूक्ष्म मन की वृत्तिद्वारा सूक्ष्म विषय का अनुभव करते है। इस विषय में श्रुति का प्रमाण है कि "तैजसही सूक्ष्म वस्तु का उपभोग करता है"॥५०॥**

**अत्रापि समष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बिताकाशवच्चाभेदः। एवं सूक्ष्मशरीरोत्पत्तिः ॥५१॥**

(सं० टी०) इहापि विज्ञानमयादिकोशत्रयस्य समष्टिरूपस्य तदवच्छिन्नसूत्रात्मनश्च व्यष्टिरूपविज्ञानमयादिकोशत्रयस्य तदवच्छिन्नतैजसचैतन्यस्य च वनवृक्षादितदवच्छिन्नाकाशादिदृष्टांतमुखेनाऽभेदं दर्शयति। अत्रापीति। समष्टिव्यष्ट्युपाध्योर्वनवृक्षवज्जलाशयजलवच्चा भेदः उपाधिद्वयावच्छिन्नचैतन्ययोः सूत्रात्मतैजसयोरपि वनवृक्षावच्छिन्नाकाशवज्जलाशयजलगतप्रतिबिंबाकाशवच्चाभेद इत्यर्थः। सूक्ष्मशरीरोत्पत्तिप्रकरणमुपसंहरति। एवमिति ॥५१॥

**(भा० टी०) जैसे वन और वृक्ष यह परस्पर विभिन्न नहीं है जैसे वनावच्छिन्न**

आकाश से वृक्षावच्छिन्न आकाश कोई विभिन्न नहीं है जैसे तालाब का और जल का कोई भेद नहीं है जलगत प्रतिबिम्बित आकाश की और जलाशय के प्रतिबिम्बित आकाश की कोई विभिन्नता नहीं है इसी प्रकार सूक्ष्म शरीर की समष्टि और व्यष्टि की तथा तदुपहित हिरण्यगर्भ और तैजसकी परस्पर विभिन्नता नहीं है। इसी प्रकार सूक्ष्म शरीर की उत्पत्ति है॥५१॥

**स्थूलभूतानि तु पंचीकृतानि । पंचीकरणं तु आकाशादि-पंचस्वेकैकं द्विधा समं विभज्य तेषु दशभागेषु प्राथमिकान् पंच भागान् प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्द्धभागं परित्यज्य भागान्तेषु संयोजनम् । तदुक्तम् "द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः ॥स्वस्वेतरद्वितीयांशैर्योजनात्पंचपंच ते" इति ॥५२॥**

(सं० टी०) अथेदानीं स्थूलशरीरोत्पत्तिं निरूपयितुमुपक्रमते । स्थूलभूतानि त्विति । तुशब्दः पूर्वस्माद्वैषम्यं द्योतयति । पंचीकृतानीति । अपंचीकृतसूक्ष्मभूतापेक्षया स्थूलभूतानि पंचीकृतानीत्यर्थः । पंचीकरणमेव प्रतिपादयितुं प्रतिजानीते पंचीकरणं त्विति । पंचीकरणप्रकारमेवाह । आकाशादीति । अयमर्थः । सृष्टिकाले सकलप्राण्यदृष्टवशादीश्वरप्रेरणयाकाशवायुतेजोबन्नान्यनाद्यविद्यासहायभूतात्परमात्मनः सकाश दनुक्रमजातानि तान्यपंचीकृतानि सूक्ष्माणि व्यवहारासमर्थानीति कृत्वा तदीयस्थौल्यापेक्षाया व्यवहर्तृप्राणि जातधर्माधर्मापेक्षयैव तान्येव भूतानि पंचीकृतानि भवंति तानि च प्रत्येकं द्वैविध्यमापद्यंते तेष्वाकाशादिषु दशसु भागेषु प्राथमिकान् पंचभागान्प्रत्येक चतुर्धा समं विभज्य स्वार्धभागपरित्यागेन चतुर्णां प्रत्येकं भागांतरेषु संनिवेशेन पंचीकृतानि स्थूलानि भवंतीति ।अस्मिन्नर्थे वृद्धसंमतिमाह । द्विधेति ॥५२॥

**(भा० टी०) इकट्ठे हुए आकाश आदि पञ्चभूतों को स्थूलभूत कहते हैं, इसी आकाशादि पञ्चभूतों के मध्य में से प्रत्येक भूत को समान भाग करने से दश १० भाग होते हैं तदनन्तर उन्हीं दश भाग के प्रथम पञ्चमभाग को प्रत्येक पञ्चभूत के समान चार भाग करके उन्हीं संपूर्ण प्रत्येक चार भागों के द्वितीय अर्द्ध को छोड़कर और चारभूत के द्वितीयार्द्ध भाग के सहित मिलाने को पंचीकरण कहते हैं। इस विषय के प्रमाण स्वरूप अन्यान्य ग्रन्थों में भी लिखा है-"पञ्चभूत के प्रत्येक के समान दो भाग करे फिर उसी पञ्चभूत के प्रत्येक प्रथम भाग के चार भाग करे द्वितीय पञ्चभूत के प्रत्येक प्रथम अंश में प्रत्येक चार भाग के मिलाने को पञ्चीकरण कहते हैं"॥५२॥**

**अस्याप्रामाण्यं नाशङ्कनीयं त्रिवृत्कारणश्रुतेः पंचीकरण-स्याप्युपलक्षणार्थत्वात् । पंचानां पंचात्वकत्वे समानेऽपि "तेषु च वैशिष्ट्यात्तु तद्वादस्तद्वादः" इति न्यायेन आकाशादिव्यपदेशः संभवति ।।५३।।**

(सं० टी०) पंचीकरणस्य त्रिवृत्करणप्रतिपादकश्रुत्यंतरविरोधमाशंक्य परिहरति अस्य प्रामाण्यमिति । भूतत्रयसृष्टिश्रुतौ सृष्टिपरिपूर्णार्थमन्यत्र श्रुतमपिभूतद्वयमाश्रित्य भूतपंचकाभिप्रायण भूतत्रयसृष्टिप्रतिपादनादविरोध इत्यर्थः । आकाशादीनां पंचभूतानां चतुर्धाविभक्तानामन्योन्यं प्रत्येकानुप्रवेशेन पञ्चीकृतानां पंचात्मकत्वादिव्यपदेशो न स्यादित्याशंक्य परिहरति । पंचानामिति । आकाशादीनां पंचानां पंचात्मकत्वे समानेपि तेषु पंचभूतेषु तत्तद्विशेषानुप्रवेशात्तन्नामभिर्व्यवहारः संभवतीत्यर्थः ।।५३।।

**(भा० टी०) कहे हुए पञ्चीकरण के प्रमाण विषय की शङ्का नहीं करनी, क्योंकि त्रिवृत्करण की श्रुति से पञ्चीकरण का भी उल्लेख हो जाता है पञ्चभूत के पञ्चात्मको रूप में समान अर्थात् मिले हुए होने पर प्रत्येक पंचभूत का अलग अलग व्यवहार होता है, इस विषय में न्याय प्रमाण है-"आकाशादि पंचभूत में अपने अपने अंश के आधिक्य होने से सर्व भूतों का आकाशादि नाम होता है"।।५३।।**

**तदानीमाकाशे शब्दोऽभिव्यज्यते, वायौ शब्दस्पर्शौ अग्नौ शब्दस्पर्शरूपाणि, अप्सु शब्दस्पर्शरूपरसाः, पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च ।।५४।।**

(सं० टी०) तदानीमिति । यदा पंचीकृतान्याकाशादीनि तदानीं स्थूलत्वेन स्वकार्योत्पादनासमर्थत्वादाकाशेऽव्यक्तरूपेण स्थितः शब्दः अभिव्यज्यते व्यक्तो भवतीत्यर्थः ।।५४।।

**(भा० टी०) पञ्चभूत के पञ्चीकरण के समय आकाश में शब्दगुण, वायु में शब्द और स्पर्श, अग्नि में शब्द स्पर्श और रूप, जल में शब्द स्पर्श रूप और रस, पृथ्वी में शब्द स्पर्श रूप रस और गन्ध गुण प्रकाशित होते हैं।।५४।।**

**एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवःस्वर्महर्जनस्तपः सत्यमित्येतन्नामकानामुपर्युपरि विद्यमानानामतलवितलसुतलरसातलतलातलमहातलपातालनामकानामधोऽधो विद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्गतचतुर्विधस्थूलशरीराणामन्नपानादीनाञ्चोत्पत्तिर्भवति ।।५५।।**

(सं० टी०) उक्तेभ्यो भूतेभ्यः चतुर्दशभुवनोत्पत्तिप्रकारं दर्शयति । एतेभ्य इति ।

एतेभ्यो भूतेभ्यः समुत्पन्नब्रह्मांडस्य चतुर्विधशरीराणां च तद्योग्यान्नपानादीनां चोत्पत्तिर्भवतीत्यर्थः ॥५५॥

(भा० टी०) इन्हीं संपूर्ण पञ्चीकृत आकाशादि भूतों से ऊपर ऊपर विद्यमान भूर्लोक भुवर्लोक स्वर्लोक महर्लोक जनलोक तपलोक और सत्यलोक उत्पन्न होते हैं। इन्हीं से क्रम से नीचे नीचे होने वाले अतल वितल सुतल रसातल तलातल महातल और पाताल ये संपूर्ण लोक उत्पन्न होते हैं। इसी प्रकार इन पञ्चभूतों से ही ब्रह्माण्ड और चार प्रकार के स्थूलशरीर और शरीरों के भोज्य अन्नपानादि उत्पन्न होते हैं।॥५५॥

**चतुर्विधस्थूलशरीराणि जरायुजाण्डजस्वेदजोद्भिज्जाख्यानि ॥ जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादीनि । अण्डजानि अण्डेभ्यो जातानि पक्षिपन्नगादीनि । स्वेदजानि स्वेदेभ्यो जातानि यूकमशकादीनि । उद्भिज्जानि भूमिमुद्भिद्य जातानि लतावृक्षादीनि ॥५६॥**

(सं० टी०) चतुर्विधशरीराण्युद्दिशति । चतुर्बिधेति । तानि च यथोद्देशं विवृणोति । जरायुभ्य इति ॥५६॥

(भा० टी०) स्थूलशरीर के चार भेद हैं। जरायुज, अण्डज स्वेदज व उद्भिज्ज। जरायु से उत्पन्न होने वाले मनुष्य पशु आदि को जरायुज कहते हैं। अण्ड से उत्पन्न होने वाले पक्षी सर्पादि को अण्डज कहते हैं। स्वेद (पसीना) से उत्पन्न होने वाले यूका मशक आदि को स्वेदज कहते हैं। पृथ्वी को भेदकर उत्पन्न होने वाले बेल वृक्ष इत्यादि को उद्भिज्ज कहते हैं।॥५६॥

**अत्रापि चतुर्विधस्थूलशरीरम् ॥ एकानेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः, वृक्षवज्जलवद्वा व्यष्टिरपि भवति । एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडिति चोच्यते । सर्वनराभिमानित्वाद्विविधं राजमानत्वाच्च अस्यैषा समष्टिः स्थूलशरीरम् अन्नविकारत्वादन्नमयकोशः । स्थूलभोगायतनत्वाज्जाग्रदिति चोच्यते ॥५७॥**

(सं० टी०) पूर्ववदत्रापि समष्टित्वं व्यष्टिभेदं दर्शयति । अत्रापीति । चतुर्विधशरीरजातमापि शरीरमित्येकबुद्धिविषयतया वनवत्समष्टित्वं प्रत्येकं तत्तच्छरीरविषयतयाऽनेकबुद्धिविषयत्वात् व्यष्टित्वं च लभत इत्यर्थः । अधुना भूरादिचतुर्दशभुवनांतर्गतचतुर्विधस्थूलशरीरसमष्ट्युपहितचैतन्यस्य वैश्वानरत्वा-

परपर्यायं वैराजत्वं दर्शयति । एतदीति । तत्र युक्तिमाह । सर्वनराभिमानित्वादिति । सर्वप्राणिनिकायेष्वहमित्यभिमानत्त्वाद्वैश्वानरत्वं विविधं नानाप्रकारेण । प्रकाशमानत्वाच्च वैराजत्वं लभत इत्यर्थः । अस्येति । अस्य विराट्चैतन्यस्यैषा पूर्वोक्ता या ब्रह्मांडांतर्गतचतुर्विधस्थूलशरीरसमष्टिरेव स्थूलशरीरमित्यर्थः । अन्नविकारत्वादिति । अन्नविकारबाहुल्यादन्नमयत्वमात्माच्छादकत्वात्कोशत्वं स्थूलशरीरादिविषयप्रयुक्तसुखदुःखभोगायतनत्वाच्च स्थूलशरीरत्वम् इंद्रियैरर्थोपलंभाज्जाग्रदवस्थात्वं घटत इत्यर्थः ॥५७॥

**(भा० टी०) जैसे बनके समूह की समष्टि है और संपूर्ण वृक्ष वन की व्यष्टि है और तालाब जल की समष्टि है और जल तालाब की व्यष्टि है। इसी प्रकार यहां भी चार प्रकार के शरीर एक जगह इकट्ठे हुए समष्टि कहाते हैं और अलग-अलग व्यष्टि कहाते है। इसी स्थूलशरीर की समष्टि से उपहित चैतन्य सर्वदेह का अभिमानी अनेक प्रकार से विराजमानवैश्वानर और विराट्शब्द से कहा जाता है इस समष्टिरूप स्थूलशरीर को अन्न के विकार के निमित्त अन्नमयकोश कहते है और वही समष्टि स्थूल भोग का स्थान है इस कारण जाग्रत् शब्द से कहा जाता है॥५७॥**

**एतद्व्यष्ट्युपहितं चैतन्यं विश्वइत्युच्यते । सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रवेष्टृत्वात् । अस्याप्येषा व्यष्टिः स्थूलशरीरमन्नविकारत्वात् अन्नमय कोषः ॥ स्थूलभोगायतनत्वात् जाग्रदिति चोच्यते ॥५८॥**

(सं० टी०) चतुर्विधं स्थूलशरीरं समष्ट्युपहितं चैतन्यं सप्रपंचमभिधायेदानीं तद्व्यष्ट्युपहितं चैतन्यमभिधत्ते । एतदिति । एतेषां चतुर्विधशरीराणां या व्यष्टिः तत्तच्छरीरव्यक्तिः ॥ तदुपहितं चैतन्यं विश्व इत्युच्यत इत्यर्थः । तत्र हेतुमाह । सूक्ष्मशरीराभिमानभिति । सूक्ष्मलिंगशरीराभिमानमपरित्यज्य स्थूलशरीरेषु प्रविश्य तत्तत्स्थूलशरीरेषु सर्वेषु प्रत्येकमहमित्यभिमानवत्त्वाद्विश्वत्वमित्यर्थः । अस्यापीति । अस्य विश्वचैतन्यस्याप्येषा तत्तच्छरीरव्यक्तिविशेषलक्षणा व्यष्टिः सैव स्थूल शरीरमित्यर्थः । अत्राप्यन्नविकारबाहुल्यादन्नमयत्वं चैतन्याच्छादकत्वात्कोशत्वमिन्द्रियैरर्थोपलंभाज्जाग्रत्त्वं च क्रमेण दर्शयति। अन्नविकारत्वादिति ॥५८॥

**(भा० टी०) व्यष्टिरूप स्थूलशरीर जो उपहित चैतन्य है उसको विश्वशब्द से कहते है। इसी कारण यह चैतन्य सूक्ष्मशरीर के अभिमान को विना छोड़े ही स्थूल शरीर में प्रवेश करता है पूर्वोक्त व्यष्टि को स्थूलशरीर कहा है इसके अन्नविकार स्वरूप को प्रवेश अन्नमयकोश कहते है। और वही व्यष्टि स्थूलभोग का स्थान है इस कारण जाग्रतशब्द से कहा जाता है॥५८॥**

**तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कप्रचेतोऽश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्श-रूपरसगंधान् अग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नि-यंत्रितेनवागादीन्द्रियपञ्चकेन क्रमाद्वचनादानगमनविस-र्गानन्दान् चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमान्नियन्त्रिते मनो-बुद्ध्यहङ्कारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमात् संश-यनिश्चयाहंकार्यचैतांश्च सर्वानेतान् स्थूलविषयाननुभ वतः। "जागरितस्थानो बहिः प्रज्ञः" इत्यादिश्रुतेः ॥५९॥**

(सं० टी०) अधुना जाग्रदवस्थायां विश्ववैश्वानरयोः तत्तद्देवताधिष्ठितश्रोत्रा-दिभिः चतुर्दशभिः करणैः शब्दादिविषयग्रहणप्रकारं दर्शयति । तदानीमिति । अस्मिन्नर्थे श्रुतिं संवादयति । जागरितेति । जागरितं स्थानं यस्य स जागरितस्थानः बही रूपादौ चक्षुरादिग्राह्ये प्रज्ञा यस्य स बहिःप्रज्ञः ॥५९॥

**(भा० टी०) जाग्रत् काल में विश्व और वैश्वानर ये दोनों दिशा वायु सूर्य वरुण और अश्विनीकुमार इनके द्वारा प्रेरणा किये हुए कर्ण त्वचा चक्षु जिह्वा और घ्राण इन पांच ज्ञानेन्द्रियों करके क्रम से शब्द स्पर्श रूप रस और गन्ध इन पांच विषयों का अनुभव करते है। इसी प्रकार अग्नि इन्द्र विष्णु यम और ब्रह्मा इनके द्वारा प्रेरणा किये हुए वाणी पाणी पाद पायु और उपस्थ इन पांच कर्मेन्द्रियों करके क्रम से वाक्य ग्रहण चलना त्याग और आनंद इन पांच बाह्य विषयों का अनुभव करते हैं और चन्द्रमा, ब्रह्मा, शिव और विष्णु इन चार देवताओं के प्रेरणा किये हुए मन बुद्धि अहंकार और चित्त इन इन्द्रियों करके क्रमसे संशय निश्चय अहंकार और चित्त इन चार स्थूल विषयों का अनुभव करते है इस विषय में श्रुति भी प्रमाण है-"जाग्रत् अवस्था में विश्व और वैश्वानर बाह्य स्थूल विषयों का अनुभव करते हैं"॥५९॥**

**अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योस्तदुपहितयोर्विश्व-वैश्वानरयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशय-जलवत्तद्गतप्रतिबिम्बाकाशवच्च वा पूर्ववदभेदः । एवं पञ्चीकृतपञ्चभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः ॥६०॥**

(सं० टी०) अनयोर्विश्ववैश्वानरयोर्वनवृक्षावच्छिन्नाकाशदृष्टांतेन जलाशयगत-प्रतिबिंबाकाशदृष्टांतेन च पूर्ववदभेदं साधयति । अत्रापीति । स्थूलप्रपंचोत्पत्तिमुप-संहरति । एवमिति ॥६०॥

**(भा० टी०) जैसे वन और वृक्ष में वनावच्छिन्न आकाश और वृक्षावच्छिन्न आकाश में तथा जलाशय में और जल में और तालाब प्रतिबिम्बित आकाश और**

जल प्रतिबिम्बित आकाश में कुछ भेद नहीं है। इसी प्रकार स्थूल शरीर की समष्टि और व्यष्टि से तथा स्थूल शरीर समष्टिगत उपहित वैश्वानर और स्थूल शरीर की व्यष्टिगत उपहित विश्वका भी कुछ भेद नहीं है इस प्रकार इकट्ठे किये हुए पंचभूत से स्थूल शरीर की उत्पत्ति होती है।।६०।।

**एतेषां स्थूलसूक्ष्मकारणशरीरप्रपञ्चानांसमष्टिरेको महान् प्रपञ्चो भवति । यथा अवान्तरवनानां समष्टिरेको महाञ्जलाशयः । तदुपहितविश्ववैश्वानरादीश्वरपर्यन्तं चैतन्यमपि अवान्तरवनावच्छिन्नाकाशवदवान्तर-जलाशयगतप्रतिबिम्बिताकाशवच्च एकमेव ।।६१।।**

(सं० टी०) स्थूलसूक्ष्मकारणप्रपंचानां व्यष्टिभूतानां प्रत्येक विवक्षयाऽवांतर-प्रपंचत्वमभिधायेदानीं तेषां समष्टिरेवैकं महाप्रपंचत्वं दर्शयति- एतेषांमिति । तत्र दृष्टांतमाह । यथेति । यथा धवखदिरपलाशाद्यवांतरवनानां समष्टिः समुदाय-विवक्षया एकं महद्वनं भवति । यथा वापीकूपतडागाद्यवांतरजलाशयानां समष्टिः समुदायविवक्षया एको महाञ्जलाशयो भवति । तथैतेषां स्थूलसूक्ष्मकारणावांतर-प्रपंचानामपि समष्टिः समुदायविवक्षया एको महान्प्रपंचो भवतीत्यर्थः । एतदेवा-ऽवान्तरमहाप्रपंचोपहितानां विश्वतैजसप्राज्ञानां वैश्वानरहिरण्यगर्भाव्याकृतानां चावांतरवनावच्छिन्नाकाशवदवांतरजलाशयगतप्रतिबिंबाकाशवच्चाभेद इत्याह । एतदुपहितमिति ।।६१।।

(भा० टी०) जिस प्रकार अलग अलग वनों की समष्टि से एक बड़ा वन हो जाता है तथा अलग अलग तालाबों की समष्टि से एक बड़ा तालाब हो जाता है इसी प्रकार स्थूल कारण और सूक्ष्म शरीर के प्रपञ्च की समष्टि से एक बड़ा प्रपंच हो जाता है। जैसे संपूर्ण वनावच्छिन्न आकाश और यावत् जलाशयगत प्रतिबिम्बित आकाश एक ही आकाश है इसी प्रकार संपूर्ण प्रपंचावच्छिन्न वैश्वानर, विश्व, हिरण्यगर्भ, तैजस, प्राज्ञ और ईश्वर यह सब एक ही चैतन्य है।।६१।।

**आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायःपिण्डवद-विविक्तं सत् अनुपहितं चैतन्यं "सर्वं खल्विदं ब्रह्मैव" इति महावाक्यवाच्यं भवति विविक्तं सल्लक्ष्यमपि भवति ।।६२।।**

(सं० टी०) चैतन्यप्रपंचयोर्भेदे "सर्वं खल्विदं ब्रह्म" इति श्रुत्या विरोधमोशंक्य परिहरति । आभ्यामिति । उक्तमहत्प्रपंचतदवच्छिन्नचैतन्याभ्यां तप्तायःपिंडवदन्यो-न्यतादात्म्याध्यासापन्नं यद्वस्तु श्रुतं तदवच्छिन्नचैतन्यं "सर्वं खल्विदं ब्रह्म" इति

वाक्यस्यवाच्यं भवति । अन्यान्यतादात्म्याध्यासरहितं सल्लक्ष्यं भवतीत्यर्थः ॥६२॥

(भा० टी०) जैसे जलते हुए लोहे से अभिन्न अग्नि "अयो दहति" इस वाक्य का वाच्य होता है और पृथक् रूप इस वाक्य का लक्ष्य होता है इसी प्रकार महत्प्रपञ्चावच्छिन्न चैतन्य इस महत्प्रपञ्च से अभिन्न होकर (सर्वं खल्विदं ब्रह्म) इस वाक्य का वाच्य होता है और और पृथक् रूप होकर इस महावाक्य का लक्ष्य होता है॥६२॥

**एवं वस्तुन्यवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः । इदानीं प्रत्यगात्मनि इदमिदमयमारोपयतीति विशेष उच्यते । तथाच अतिप्राकृतस्तु "आत्मा वै जायते पुत्रः" इत्यादि श्रुतेः स्वस्मिन्निव स्वपुत्रेऽपि प्रेमदर्शनात् पुत्रे पुष्टे नष्टेऽहमेव पुष्टो नष्टश्चेत्याद्यनुभवाच्च पुत्र आत्मेति वदति । चार्वाकस्तु "स वा एष पुरुषोऽन्नरसमयः" इत्यादि श्रुतेः प्रदीप्तगृहात्स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात् स्थूलोऽहं कृशोऽहमित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति । अपरश्चार्वाकः "ते ह प्राणाः प्रजापतिं समेत्यक्रयुः" इत्यादिश्रुतेः इन्द्रियाणामभावे शरीरचलनाभावात् काणोहं बधिरोहं इत्याद्यनुभवाच्च-इन्द्रियाण्यात्मेति वदति ॥६३॥**

(सं० टी०) अध्यारोपप्रकरणमुपसंहरति एवमिति । ईश्वरचैतन्ये सामान्यतो महाप्रपंचाध्यारोपप्रकारं सप्रपंचमभिधायेदानीं प्रत्यगात्मनि विशेषाध्यारोषप्रकारं दर्शयितुमुपक्रमते । इदानीमित्यादिना । अध्यारोपमेवाह । इदमिदमिति । प्रत्यक्षादिसंनिहितस्यापत्यादिधर्मिण इदमिदं विनिर्देशः क्रियते । इदमित्यादेर्वीप्सा। तथा चातिस्थूलबुद्धिस्तु इदमपत्यादिकमेवाहम् । अयं पुत्र एवाहमित्यत्यंतबाह्यधर्मविशेषेणात्मन्यध्यारोपयतीत्यर्थः । अत्र श्रुतिमाह । आत्मा वा इति । तत्र युक्तिमाह । स्वस्मिन्निति । यथा स्वशरीरे प्रेमदर्शनादात्मत्वभ्रमः एवं स्वपुत्रादिशरीरेऽपि प्रेमदर्शनादात्मत्वभ्रम इत्यर्थः । अत्रानुरूपमनुभवमाचष्टे । पुत्र इति । एतदपेक्षया विशिष्टबुद्धिरन्यः कश्चिदधिकारी स्वदेहमेवात्मानं मन्यत इत्याह । चार्वाकस्त्विति । अत्रापि श्रुतिमाह । स वा इति । पुत्रादिशरीरस्यात्मत्वाभावे युक्तिं दर्शयन् पूर्वोक्ताधिकारिणःसकाशात्स्वस्य वैलक्षण्यं दर्शयति । प्रदीप्तगृहादिति ।

देहस्यात्मत्वेऽनुभवं च प्रमाणयति । स्थूलोहमिति । ततोप्युत्कृष्टः कोप्यधिकारी श्रुतियुक्त्यनुभवेभ्यः इन्द्रियाण्यात्मेति वदति इत्याह । अपर इति ।।६३।।

**(भा० टी०) इस प्रकार संक्षेप से वस्तुरूप ब्रह्म चैतन्य में अवस्तु का आरोप स्वरूप अध्यारोप दिखलाया। अब विशेषरूप से जीवचैतन्य में अध्यारोप अर्थात् कौन कौन मतावलंबी किस वस्तु को जीवात्मा कहते हैं सो दिखाते हैं। अति अज्ञानी पुरुष पुत्र को आत्मा कहते हैं और इस श्रुति का प्रमाण देते हैं-"आत्मा ही पुत्ररूप होकर जन्म लेता है"। परंतु युक्ति भी आश्चर्य ढंग की देते हैं-कहते हैं "अपने में जिस प्रकार प्रेम होता है, पुत्र में भी उसी प्रकार प्रेम का अनुभव होता है। इस कारण पुत्र ही आत्मा है। इस विषय में और अनुभव भी है। जैसे पुत्र के पुष्ट होने पर मैं पुष्ट हो गया और पुत्र के नष्ट होने पर मैं नष्ट हो गया इस प्रकार ज्ञान होता है इस कारण पुत्र ही आत्मा है" और चार्वाक मतावलंबी तो स्थूल शरीर को आत्मा कहते हैं। और इस श्रुति का प्रमाण भी देते हैं-"अन्नमय रस के विकारयुक्त यह पुरुष ही आत्मा है"। और यह युक्ति देते हैं "सब पुरुष पुत्र का भी परित्याग करके जलते हुए घर में से अपने बचाने का उपाय करते हैं, और इस विषय में अनुभव भी है। ऐसा कहते हैं क्योंकि "मैं पुष्ट हूँ मैं दुर्बल हूँ" ऐसा ज्ञान सर्व साधारण को होता है इस कारण स्थूल शरीर ही आत्मा है। दूसरे चार्वाकमतावलम्बी तो इन्द्रियों के समूह को आत्मा कहते हैं और इस श्रुति का प्रमाण देते है-"इन्द्रियों का समूह ब्रह्मा के समीप जाता है तब इन्द्रियों के न होने से शरीर कुछ व्यापार नहीं कर सकता है" इस कारण इन्द्रिय समूह ही आत्मा है और यह युक्ति देते हैं "मैं अन्धा हूँ, मैं बधिर हूँ, इस प्रकार ज्ञान सबको होता है इससे इन्द्रियगण ही आत्मा है"।।६३।।**

**अपरश्चार्वाकः " अन्योऽन्तर आत्मा प्राणमयः" इत्यादिश्रुतेः प्राणाभावे इन्द्रियचलनायोगात् अहमशनायवानहं पिपासावान् इत्याद्यनुभवाच्च प्राण आत्मेति वदति ।अन्यस्तु चार्वाकः "अन्योन्तर आत्मा मनोमयः" इत्यादिश्रुतेः मनसि सुप्ते प्राणादेर भावात् अहं सङ्कल्पवानहं विकल्पवानित्याद्यनुभवाच्च मन आत्मेति वदति।।६४।।**

(सं० टी०) ततोप्युत्तमोऽधिकारी कश्चिच्छ्रुतिप्रमाणानुभवयुक्तिबलात् प्राण एवात्मेत्याह । अपर इति । ततो विशिष्टोधिकारी कश्चित्स्वमतानुकूलश्रुत्यादिबलान्मन एवात्मेत्याह । अन्यस्त्वित्ति ।।६४।।

**(भा० टी०) कोई कोई चार्वाकमतावलम्बी प्राण को आत्मा कहते हैं और इस**

श्रुति का प्रमाण देते हैं-"प्राणमय अन्तरात्मा शरीरादि से भिन्न है"। और मत के स्थापन के अर्थ ऐसी युक्ति देते हैं कि-"जिस समय शरीर में प्राण नहीं रहता है तब इन्द्रियों के समूह से कोई क्रिया नहीं हो सकती है। इससे प्राण ही आत्मा है" और यह युक्ति दिखाते हैं-" मैं क्षुधार्त्त हूँ, मैं पिपासातुर हूँ, इस प्रकार आपण्डितपामर पर्यन्त को अनुभव होता है, इस कारण प्राण ही आत्मा है"। कोई कोई चार्वाकमतावलम्बी मन को आत्मा कहते हैं और इस श्रुति का प्रमाण देते हैं-"मनोमय अन्तरात्मा शरीर, इन्द्रिय और प्राण इनसे भिन्न है" इस कारण मनही आत्मा है। और अपने मत की प्राधान्यता और रक्षा के अर्थ यह युक्ति देते हैं-"जिस समय मन स्वप्नावस्था में होता है, तब प्राणादिका अभाव होता है। और मुझको यह संकल्प है और यह विकल्प है इस प्रकार अनुभव भी सबही को होता है" इस कारण मन ही आत्मा है॥६४॥

**बौद्धस्तु "अन्योऽन्तर आत्मा विज्ञानमयः" इत्यादिश्रुतेः कर्तुरभावे करणस्य शक्त्यभावात् 'अहं कर्त्ता अहं भोक्ता' इत्याद्यनुभवाच्च बुद्धिरात्मेति वदति॥६५॥**

(सं० टी०) उक्तेभ्यः पंचभ्यो विलक्षणः कश्चिद्विज्ञानवादी श्रुत्यादिभिर्विज्ञानमात्मेत्याह । बौद्धस्त्विति ॥६५॥

(भा० टी०) बौद्धमतावलम्बी बुद्धि को आत्मा कहते है! और इस श्रुति का प्रमाण देते है-"विज्ञानमय अन्तरात्मा शरीर, प्राण और मन इनसे भिन्न है" और यह युक्ति देते हैं-"जिस समय कर्त्ता का अभाव होता है तब ही करण की शक्ति का अभाव होता है। ऐसी प्रतीति है और बुद्धि के अभाव होने पर इन्द्रियों की शक्ति का अभाव देखने में आता है और 'मैं कर्त्ता हूँ मैं भोक्ता हूँ इस प्रकार अनुभव भी आपामर पण्डित साधारण सबही को होता है इस प्रकार बुद्धि ही को आत्मत्व सिद्ध होता है"॥६५॥

**प्राभाकरतार्किकौ तु "अन्योऽन्तर आत्मा आनन्दमयः" इत्यादिश्रुतेःसुषुप्तौ बुद्ध्यादीनामज्ञाने लयदर्शनात् 'अहमज्ञ' इत्याद्यनुभवाच्च अज्ञानमात्मेति वदतः ॥६६॥**

(सं० टी०) उक्तेभ्योतिरिक्तौ प्राभाकरतार्किकौ स्वमतोपयोगि श्रुत्यादिसद्भावादज्ञानमात्मेति वदत इत्याह । प्राभाकरतार्किकाविति ॥६६॥

(भा० टी०) प्राभाकर (मीमांसक) और तार्किक (नैयायिक) तो दोनों अज्ञान को ही आत्मा कहते है और इस श्रुति का प्रमाण देते हैं-"अन्तरात्मा शरीरादि से भिन्न और आनन्दमय है।" और इस प्रकार युक्ति प्रमाण देते हैं कि "सुषुप्ति अवस्था में अज्ञान में बुद्ध्यादिका लय होता और 'मैं मूर्ख हूँ मैं ज्ञानी हूँ'

इस प्रकार अनुभव भी यावन्मात्र को होता है इस कारण अज्ञान ही आत्मा है"।।६६।।

**भट्टस्तु "प्रज्ञानघनएवानन्दमयआत्मा" इत्यादिश्रुतेःसुषुप्तौ प्रकाशाप्रकाशसद्भावात् मामहं जानामीत्याद्यनुभवाच्च अज्ञानोपहितं चैतन्यमात्मेति वदति।।६७।।**

(सं० टी०) अन्यभट्टस्त्वज्ञानावच्छिन्नचैतन्यमात्मेत्याह । भट्टस्त्विवति ।।६७।।

(भा० टी०) भट्टमतावलम्बी कोई मीमांसक अज्ञान समष्टि द्वारा उपहित चैतन्य अर्थात् ईश्वरचैतन्य को ही आत्मा कहते हैं और इस श्रुति का प्रमाण देते हैं-"आत्मा ही प्रज्ञानघन तथा आनन्दमय है" और इस प्रकार युक्ति प्रमाण देते हैं कि-"सुषुप्तिकाल में सबके लीन होने पर भी अज्ञानोपहित चैतन्य का प्रकाश रहता है और मैं अपने को नहीं जानता हूं ऐसा अनुभव होता है। इस कारण अज्ञानोपहित चैतन्य ही आत्मा है"।।६७।।

**अपरो बौद्धः "असदेवेदमग्र आसीत्" इत्यादिश्रुतेःसुषुप्तौ सर्वाभावादहं सुप्तः सुषुप्तौ नासमित्युत्थितस्य स्वभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति ।।६८।।**

(सं० टी०) बौद्धैकदेशी कश्चित् श्रुत्यादिभिः शून्यमात्मेति वदतीत्याह । अपर इति ।।६८।।

(भा० टी०) कोई बौद्धमतालम्बी शून्य को ही आत्मा कहते हैं। और इस श्रुति का प्रमाण देते हैं-"जगत् पहले असत् था" और यह युक्ति देते हैं कि-"सुषुप्तिकाल में बुद्ध्यादि सबका अभाव होता है और सुषुप्ति से उठकर पुरुष को ऐसा ज्ञान होता है कि सुषुप्ति में मेरा अभाव हो गया था इस अनुभव के कारण शून्य ही आत्मा है"।।६८।।

**एतेषां पुत्रादीनां शून्यपर्य्यंतानामनात्मत्वमुच्यते । एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मबाधदर्शनात्पुत्रादीनामनात्मत्वं स्पष्टमेवेति ।।६९।।**

(सं० टी०) अधुना पुत्रादिशून्यपर्यन्तानामात्मत्वप्रतिपादकश्रुत्यादेराभासत्वात्पूर्वपूर्वमतस्योत्तरोत्तरमतबाध्यत्वाच्च दृश्यत्वजडत्वादिहेतुकदंबकैश्चानात्मत्वं प्रसिद्धमेवेति प्रतिपादयितुं प्रतिजानीते । एतेषामिति । पुत्राद्यात्मवादिनामतिमन्दाधिकारित्वात्तत्तत्प्रतिपादितश्रुत्यादेरपि पूर्वपूर्वस्यात्तरोत्ताबाध्यत्वात्पुत्रादिशून्यांतानामनात्मत्वं प्रसिद्धमेवेति प्रतिज्ञातमेवार्थं प्रकटयति । एतैरिति ।।६९।।

(भा० टी०) ठीक तो यह है। पुत्र को आदिले शून्य पर्यन्त किसी को आत्मा नहीं कहा जाता है। क्योंकि पुत्रादिकों का अनात्मत्व स्पष्ट मालूम होता है। जो पुत्रादिको आत्मा कहे हैं, वे बड़े मूढ़ हैं उनका पहिले दिखाया हुआ श्रुतिप्रमाण युक्तिप्रमाण और अनुभव प्रमाण ये सब उत्तरोत्तर दिखाये हुए प्रमाण युक्ति और अनुमान द्वारा सबका खण्डन हो जाता है। इसी कारण पूर्वोक्त मतावलम्बियों ने जो पुत्रादिको आत्मा कहा है, सो ठीक नहीं है।।६९।।

**"किञ्च प्रत्यगस्थूलो अचक्षुरप्राणो अमना अकर्त्ता चैतन्यं चिन्मात्रं सत्" इत्यादिप्रबलश्रुतिविरोधात् अस्य पुत्रादिशून्यपर्य्यन्तस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वात् अहं ब्रह्मेति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वादपि पुत्रादिशून्यपर्य्यन्तमखिलमनात्मैव ।।७०।।**

(सं० टी०) ननु पुत्रादिशून्यपर्यंतानामनात्मत्वे सिद्धे कस्तर्ह्यहंप्रत्ययविषय आत्मेत्याशंक्य अस्थूलादिनिषेधवाक्यजातबोधितं "सत्यंज्ञानमनंतं ब्रह्म" इत्यादिविधिवाक्यकोटिबोधितं यत्सत्यं ज्ञानानंताद्वयं ब्रह्म तदेवाहंप्रत्ययालंबनमिति प्रबलश्रुतियुक्तयनुभवैः प्रतिपादयितुमाह किञ्चेति । अस्थूलादिप्रबलश्रुतिवाक्यः पुत्रादिशून्यपर्यंतात्मातिरिक्तात्मस्वरूपप्रतिपादनात् पुत्रादीनां जड़त्वादिहेतुभिरनात्मत्वमित्यर्थः । अस्मिन्नर्थे प्रबलविद्वदनुभवं प्रमाणयति । अहमिति । पुत्रादिश्रुत्यादीनां दौर्बल्यं दर्शयति । तत्तदिति । यतः पुत्रादीनां जडत्वादिहेतुभिरनात्मत्वमतः पुत्रादिभासकं नित्यशुद्धत्वादिस्वरूपमेवात्मवस्त्वित्यर्थः । नहीदं विरुद्धं यत्पुत्राणामात्मत्वप्रतिपादकश्रुतीनामप्रामाण्यम् अस्थूलादिश्रुतीनां प्रामाण्यमिति, नहि वेदवाक्येषु केषांचिदप्रामाण्यं केषांचित्प्रामाण्यमिति चाशक्यं प्रतिपादयितुम् । एवं चेत्पुत्रादिश्रुतीनां प्रामाण्यस्थूलादिवाक्यानामप्रामाण्यमिति वैपरीत्ये किं न स्यात् । वेदवाक्यत्वाविशेषात् । किंच केषांचिद्वेदवाक्यानामप्रामाण्यं केषांचिद्वेदवाक्यानां प्रामाण्यप्रतिपादनार्थमिदं प्रकरणमारब्धम् अतः कथं निर्णय इति चेत, उच्यते । पुत्रादिश्रुतीनां सर्वथैव प्रामाण्यं नास्तीत्यस्माभिर्न निषिध्यते किन्त्वस्थूलादिप्रबलश्रुतिस्मृतिन्यायविरोधात्स्वार्थे तात्पर्याभावात्तेषां स्थूलारुंधतीन्यायेन पूर्वपूर्व निराकरणद्वारा सूक्ष्मसूक्ष्मवस्तूपदेशे तात्पर्यमिति एतावदेव प्रतिपाद्यते । तथाहि ध्रुवमरुंधतीं च दर्शयतीति विधिबलाद्वरवध्वारेररुंधतीदर्शने प्राप्ते परमसूक्ष्मरूपाया अरुंधत्याः प्रथमकक्षायामेव प्रतिपत्तुमशक्यत्वात्प्रथमं चंद्रज्योतीरूपारुंधतीत्युच्यते, ततः चंद्रभिन्ना तारकारुंधतीत्युच्यते तत इतरतारकाभिन्ना सप्ततारकात्मकारुंधतीत्युच्यते तदनंतरमितरतारकाचतुष्टयभिन्ना तारकात्रितयात्मकेत्युच्यते ततः

तन्मध्ये तारकेत्युच्यते ततस्तत्समीपवर्तिनी परमसूक्ष्मारुंधतीत्युच्यते न चैतावतैतेषां पंचानां वाक्यानां परस्परविरुद्धार्थप्रतिपादकत्वेनाप्रामाण्यं शक्यं प्रतिपादयितुम् । किंतु प्रतिपत्तृबुद्ध्यनुसारेण सोपानक्रमवत्पूर्वपूर्वनिराकरणद्वारा सूक्ष्मारुंधतीप्रतिपादने तात्पर्यं तद्वदत्रापि अन्नमयः प्राणमयो मनोमयो विज्ञानमय आनंदमय आत्मा ब्रह्मपुच्छं प्रतिष्ठेति पुच्छब्रह्मपर्यवसितानां पंचकोशवाक्यानामपि परस्परविरुद्धार्थप्रतिपत्तृबुद्ध्यनुसारेण सोपानक्रमवत्पूर्वपूर्वनिराकरणद्वारा परमसूक्ष्मपुच्छब्रह्मप्रतिपादने तात्पर्यं तस्मात्सर्वेषां वेदवाक्यानां साक्षात्परंपरया वाऽद्वितीयवस्तुप्रतिपादने तात्पर्यात्प्रामाण्यरूपविरोध इति संक्षेपः ॥७०॥

**(भा० टी०) यदि पुत्रादि को आत्मा कहोगे तब श्रुति आदि प्रमाणों को अत्यन्त विरोध पड़ेगा क्योंकि-आत्मा स्थूल नहीं है, आत्मा इन्द्रियगण नहीं है, प्राण नहीं है, मन नहीं है, और कर्त्ता नहीं है, परंतु केवल चैतन्य मय सत्यस्वरूप है"। इत्यादि प्रबल श्रुतिद्वारा प्रमाण होता है। पुत्रादि से शून्यपर्यंत जड़ के चैतन्य के भास के हेतु घटादि की तरह अनित्य है अर्थात् हेत्वाभास है और ज्ञानियों में ही ब्रह्म हूं इस प्रकार दृढ़ अनुभव होता है इस कारण पुत्र को आदिले शून्य पर्यंत कोई पदार्थ आत्मा नहीं कहा जा सकता। पुत्रादि को आत्मा कहने पर पूर्वोक्त श्रुति, युक्ति, अनुभव, प्रमाण का विरोध होगा इस कारण पुत्रादि को अनात्मत्व स्पष्ट मालूम होता है।॥७०॥**

**अतस्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक्चैतन्यमेवात्मतत्त्वमिति वेदान्तविदनुभवः । एवमध्यारोपः ॥७१॥**

(सं० टी०) विशेषाध्यारोपप्रकरणमुपसंहरति । एवमिति ॥७१॥

**(भा० टी०) ठीक तो जो पुत्र को आदिले शून्य पर्यंत का प्रकाशक है और जो नित्य, शुद्ध, सर्वज्ञ, मुक्त, सत्यस्वरूप, प्रत्यक् चैतन्य है वही आत्मा है ऐसा वेदान्तशास्त्र के जानने वालों का अनुभव है। इस प्रकार वस्तु में अवस्तु का अध्यारोपस्वरूप अध्यारोपन्याय विशेषरूप से दिखाया।॥७१॥**

**अपवादो नाम रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्ववत् वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम् । तदुक्तम् "सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः । अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदाहृतः" ॥७२॥**

(सं० टी०) आत्मवस्तुनि मिथ्याप्रपंचस्य सामान्यतो विशेषतश्चाध्यारोपप्रकारं सप्रपंचमभिधायेदानीं तदपवादप्रकारं वक्तुमारभते ।अपवादो नामेति ।असंगोदासीने

परमात्मवस्तुनि तद्विवर्त्तावस्तुभूताज्ञानादिमिथ्याप्रपंचस्य चिद्वस्तुमात्राविशेषतयाऽवस्थानमेवापवाद इति वक्तुंप्रथमं लौकिकदृष्टांतमाह । रज्जुइति । रज्जुस्वरूपापरित्यागेन सर्पाकारेण भासमानस्य रज्जुविवर्तस्यापवादो नाशो नामाधिष्ठानरज्जुमात्रतयाऽवस्थानवच्चिद्विवर्त्तस्याज्ञानादिप्रपंचस्य अपवादो नाशो नामाचिन्मात्रत्वेनावस्थनामित्यर्थः । अत्र यथास्वरूपेणावस्थितस्य वस्तुनोऽन्यथाभावो द्विधा भवति परिणामभावो विवर्त्त भावश्चेति तत्र परिणामभावो नाम वस्तुनो यथार्थतः स्वस्वरूपं परित्यज्य स्वरूपांतरापत्तिः यथा दुग्धमेव स्वस्वरूपं परित्यज्य दध्याकारेण परिणमते । विवर्त्तभावस्तु वस्तुतः स्वरूपापरित्यागेन स्वरूपांतरेण मिथ्याप्रतीतिः । यथा रज्जुः स्वरूपापरित्यागेन सर्पाकारेण मिथ्या प्रतिभासते । अत्र वेदांते ब्रह्मणि प्रपंचभानस्य परिणामप्रभावो नांगीक्रियते दुग्धादिवद्ब्रह्मणो विकारित्वप्रसंगादनित्यत्वादिदोषापत्तेः । विवर्त्तभावांगीकारे तु नायं दोषः, ब्रह्मणि प्रपंचभानस्य मिथ्यात्वेन विकारित्वाभावात् । तदुक्तम् "अधिष्ठानावशेषो हिनाशः कल्पितवस्तुनः" तस्माच्चिद्विवर्त्तस्य प्रपंचस्य चिन्मात्रावशेषतयावस्थानमेवापवाद इति भावः। अस्मिन्नर्थे ग्रंथांतरसंवादं दर्शयति। तदुक्तमिति ॥७२॥

**(भा० टी०) अब अपवादन्याय दिखाते हैं। रज्जु में सर्प का भ्रम होकर जिस समय वह भ्रम नष्ट हो जाता है उस समय जैसे सर्पज्ञान नष्ट हो जाता है तब केवल रज्जु का ज्ञान रह जाता है। उसी प्रकार सच्चिदानन्द ब्रह्म में अवस्तुरूप अज्ञानादि जड़ पदार्थ का भ्रम होकर जिस समय उस भ्रम का नाश हो जाता है तब केवल ब्रह्ममात्र अवस्थित रहता है क्योंकि यह रूप ज्ञान का विवर्त्त है जैसा ग्रन्थान्तर में कहा है-"जो स्वरूप को विकृत करके कार्य को उत्पादन करे वह विकारी वा परिणामी उपादान कारण कहाता है जैसे दूध दधि का विकारी वा परिणामी उपादान कारण है" और जो कारण स्वरूप का विकार विना ही करे कार्य का उत्पादन करता है, उसको विवर्त्त कारण कहते हैं जैसे रज्जु सर्प के ज्ञान के प्रति विवर्त्त कारण है॥७२॥**

**तथाहि खलूच्यते यथा एतद्भोगायतनं चतुर्विधं स्थूलशरीरजातम् एतद्भोग्यरूपान्नपानादिकम् एतदाश्रयभूतभूरादिचतुर्दशभुवनानि एतदाश्रयभूतं ब्रह्माण्डं चैतत् सर्वमेतेषां कारणरूपपञ्चीकृतभूतमात्रं भवति ७एतानि शब्दादिविषयसहितानि पञ्चीकृतभूतजातानि सूक्ष्मशरीरजातञ्चैतत् सर्वमेतेषां कारणरूपमपञ्चीकृतभूतमात्रं**

**भवति, एतदज्ञानम् अज्ञानोपहितं चैतन्यं चेश्वरादिक्मेतदाधारभूतानुपहितचैतन्यरूपं तुरीयब्रह्ममात्रं भवति आभ्यामध्यारोपापवादाभ्यां तत्त्वंपदार्थशोधनमपि सिद्धं भवति तथाहि । अज्ञानादिसमष्टिः एतदुपहितं सर्वज्ञत्वादिविशिष्टं चैतन्यम् एतदनुपहित चैतन्यं चैतत्त्रयं तप्तायः पिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवति एतदुपाध्युपहिताधारभूतमनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति ॥७३॥**

(सं० टी०) सामान्यतो दर्शितामपवादप्रक्रियां विस्तरेण प्रतिपादयितुं प्रतिजानीते । तथाहीति । स्थूलसूक्ष्मकारणप्रपंचानामुत्पत्तिवैपरीत्येन तत्तत्कारणरूपेणावस्थानमेवापवाद इत्याह । एतद्भोगायतनमिति । एतत्स्थूलशरीरं स्वाश्रयब्रह्मांडसहितं स्वकारणभूतपंचीकृतेषु पंचमहाभूतेषु लीनं सत्तन्मात्रतयावशिष्यते तानि च पंचीकृतानि भूतानि शब्दादिसहितानि सप्तदशावयवात्मकलिंगशरीराणि च स्वकारणेष्वपंचीकृतभूतेषु लीनानि भवंति तान्यपंचीकृतानि भूतानि सत्त्वादिगुणसहितानि स्वकारणज्ञानोपहितचैतन्ये लीनानि भवंति तच्चाज्ञानं तदुपहितचैतन्यं सर्वज्ञत्वादिविशिष्टं च स्वाधारभूतानुपहितचैतन्ये लीनं भवति चैतन्यमेवावशिष्यते इत्यर्थः । फलितमाह । आभ्यामिति । तत्त्वंपदार्थशोधनसकारं प्रतिजानीते । तथाहीते । अज्ञानंतदवच्छिन्नेश्वरचैतन्यं तदनुपहितचैतन्यं चैतत्त्रयं तप्तायःपिंडवदन्योन्येन तादात्म्याध्यासेनैकत्वेन प्रतीयमानं सत् तत्पदवाच्यार्थो भवतीत्यर्थः । तत्पदलक्ष्यार्थमाह । एतदुपाधीति । अज्ञानावच्छिन्नेश्वरचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्ताभ्यां विविक्तं सद्भेदविवक्षया तत्पदलक्ष्यार्थो भवतीत्यर्थः ॥७३॥

**(भा० टी०) भ्रम के नष्ट होने पर जिस प्रकार यह सम्पूर्ण प्रपञ्च अपने २ कारण में लीन होकर ब्रह्मरूप में अवस्थित होता है। सो दिखाते हैं-"स्थूलभोग का स्थानस्वरूप चार प्रकार स्थूलशरीर और भोग्य अन्न पानादि इन सबके आधारस्वरूप भूलोक को आदिले चौदह लोक और सबके वर्त्तमान स्थानस्वरूप ब्रह्माण्ड यह संपूर्ण पञ्चीकृत पञ्चमहाभूत मात्र है। शब्द स्पर्शादि विषयों सहित यह सम्पूर्ण पञ्चीकृत पञ्चभूत और सूक्ष्मशरीर यह सब अपने अपने कारणरूप अपञ्चीकृत पञ्चमहाभूत मात्र है, सत्त्वआदि गुणयुक्त यह सम्पूर्ण अपञ्चीकृत पञ्चमहाभूत उत्पत्ति के उलटे क्रम से अर्थात् पृथिवी जल से जल अग्नि से अग्नि वायु से वायु आकाश से और आकाश अज्ञान से इस प्रकार कारणरूप अज्ञानोपहित**

कारणरूप चैतन्यमात्र है। यही अज्ञान और अज्ञानोपहित चैतन्यरूप ईश्वर को आदिले सबही उसके आधारभूत अनुपहित चैतन्यरूप तुरीय ब्रह्म है। पूर्वोक्त अध्यारोप और अपवाद में कही हुई रीति के द्वारा "तत्" और "त्वम्" इन दोनों पदार्थों का शोधन (सङ्गति) ठीक होती है अज्ञानादि की समष्टि अर्थात् अज्ञान, सूक्ष्मशरीर और स्थूलशरीर की समष्टि तदुपमहित चैतन्य अर्थात् ईश्वर, हिरण्यगर्भ और विराट् चैतन्य, और अनुपहित चैतन्य, तुरीय ब्रह्म चैतन्य यह तीन प्रकार के पदार्थ (तपे हुए) लोहे की तरह अतिरिक्तरूप "तत्" इस पदके वाच्य होते हैं और अज्ञानादिकी समष्टिरूप उपाधि और तदुपहित ईश्वरादि चैतन्य का आधारभूत तुरीयब्रह्मचैतन्य "तत्" पद का लक्ष्यार्थ होता है।।७३।।

**अज्ञानादिव्यष्टिः तदुपहिताल्पज्ञत्वादिविशिष्टचैतन्यम् एतदनुपहितं चैतन्यञ्चैतत्त्रयं तप्तायः पिण्डवदेकत्वेन भासमानं त्वंपदवाच्यो भवति । एतदुपाध्युपहिताधारभूतमनुपहितं प्रत्यगानन्दं तुरीयं चैतन्यं त्वंपदलक्ष्यार्थो भवति।।७४।।**

(सं० टी०) त्वंपदवाच्यार्थमाह । अज्ञानादीति । व्यष्टिभूतपदज्ञानमंतःकरणं तदवच्छिन्नं जीवचैतन्यं तदनुपहितं चैतन्यं चैतत्त्रयं तप्तायःपिंडवत्परस्परतादात्म्याध्यासेनाभेदविवक्षया त्वंपदवाच्यार्थो भवतीत्यर्थः । लक्ष्यार्थमाह । एतदुपाधीति । अंतःकरणोपहितचैतन्यस्याधारभूतं यदनुपहितं प्रत्यगात्मानंदं तुरीयं चैतन्यं त्वंपदलक्ष्यार्थो भवतीत्यर्थः ।।७४।।

(भा० टी०) अनादि की व्यष्टि अर्थात् अज्ञान, सूक्ष्मशरीर और स्थूलशरीर तदुपहितचैतन्य अर्थात् प्राज्ञ तैजस और विश्व तथा अनुपहित चैतन्य, अर्थात् ब्रह्म चैतन्य, ये तीनों तपे हुए लोहपिण्डकी तरह अभिन्नरूप "त्वम्" पद के वाच्य होते हैं तथा अज्ञानादि की व्यष्टि और प्राज्ञ आदि चैतन्य का आधाररूप अनुपहित आनन्दरूप तुरीय ब्रह्म चैतन्य "त्वम्" इस पद का लक्ष्यार्थ होता है।।७४।।

**अथ महावाक्यार्थो वर्ण्यते । इदं तत्त्वमसिवाक्यं सम्बन्धत्रयेण अखण्डार्थबोधकं भवति सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यं पदार्थयोर्विशेषणविशेष्यभावः प्रत्यगात्मपदार्थयोर्लक्ष्यलक्षणभावश्चेति। यदुक्तम्-"सामानाधिकरण्यं च विशेषणविशेष्यता । लक्ष्यलक्षणसम्बन्धः पदार्थः प्रत्यगात्मनाम् इति"।।७५।।**

(सं० टी०) पदार्थमभिधाय वाक्यार्थमाह । अथेति । ननु जीवेश्वरयोः

किंचिज्ज्ञत्वसर्वज्ञत्वादिविशिष्टयोरत्यंतविलक्षणयोः तत्त्वमस्यादिमहावाक्यानि परस्परविरुद्धार्थप्रतिपादकानि कथमखंडैकरसं ब्रह्म प्रतिपादयंतीत्याशंक्य साक्षादैक्यप्रतिपादकत्वाभावेपि लक्षणया संबंधत्रयेणाखंडैकार्थं प्रतिपादयंतीत्याह । इदमिति । संबंधत्रयस्वरूपमाह । संबंधत्रयमिति । पदपदार्थप्रत्यगात्मनां संबंधत्रयसद्भावे वृद्धसंमतिमाह । यदुक्तमिति ।।७५।।

(भा० टी०) **अब महावाक्य के अर्थ का विचार करते है-'तत्त्वमसि' यह वाक्य तीन प्रकार के सम्बन्धों के द्वारा अखंड ब्रह्म चैतन्य का बोधक होता है सम्बन्ध त्रय कहते हैं-पहला सामानाधिकरण्य, दूसरा विशेष्यविशेषणभाव, तीसरा लक्ष्यलक्षणभाव, "तत्" और "त्वम्" इन दोनों पदों की एक अधिकरण में अवस्थिति होने पर सामानाधिकरण्य सम्बन्ध होता है दोनों पदों का परस्पर विशेष्य विशेषणरूप सम्बन्ध को विशेष्य विशेषणभाव कहते हैं। और प्रत्यगात्मा लक्ष्य और दोनों पद लक्षण इस प्रकार के सम्बन्ध को लक्ष्यलक्षणभाव संबंध कहते हैं ग्रन्थान्तर में कहा भी है "सामानाधिकरण्य विशेष्यविशेषणभाव और लक्ष्यलक्षणभाव, यह तीन प्रकार का सम्बन्ध है"।।७५।।**

**सामानाधिकरण्यसम्बन्धस्तावत् यथा सोऽयं देवदत्त इति वाक्ये तत्कालविशिष्टदेवदत्तवाचकशब्दस्य एतत्कालविशिष्टवाचकायंशब्दस्य च एकस्मिन्देवदत्तपिण्डे तात्पर्यसम्बन्धः । तथा च "तत्त्वमसि" वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतच्छब्दस्याऽपरोक्षत्वादिविशिष्टचैतन्यवाचकत्वंपदस्य चैकस्मिन् चैतन्ये तात्पर्यसम्बन्धः ।।७६।।**

(सं० टी०) पदयोः सामानाधिकरण्यम् उदाहरणनिष्ठं कृत्वा प्रदर्शयति । सामानाधिकरण्यमिति । भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे प्रवृत्तिः सामानाधिकरण्यं तत्र सोयं देवदत्त इति वाक्ये स इति तत्कालउद्देशवैशिष्ट्यं सशब्दस्य प्रवृत्तिनिमित्तम् अयमिति एतत्कालैतद्देशवैशिष्ट्यंसशब्दस्य प्रवृत्तिनिमित्तं यथा च भिन्नप्रवृत्तिनिमित्तयोः सोयं शब्दयोरेकस्मिन् देवदत्तपिंडे तात्पर्यं संबंधः सामानाधिकरण्यमित्यर्थः । उक्तमर्थं दार्ष्टांतिके योजयति । तथाचेति । तथा तत्त्वमसीति वाक्येपि परोक्षत्वसर्वज्ञत्वादिवैशिष्ट्यं तत्पदप्रवृत्तिनिमित्तम् अपरोक्षत्वकिंचिज्ज्ञत्वादिवैशिष्ट्यं त्वंपदप्रवृत्तिनिमित्तं तथा च भिन्नप्रवृत्तिनिमित्तयोः तत्त्वंपदयोरेकस्मिंश्चैतन्ये तात्पर्यं संबंधः सामानाधिकरण्यमित्यर्थः ।।७६।।

(भा० टी०) **अब सामानाधिकरण्य सम्बन्ध दिखलाते हैं। जैसे "सोऽयं देवदत्तः"**

इस वाक्य में "सः" शब्द पहले देखी हुई वस्तु का बोध होता है और "अयम्" शब्द से वर्त्तमान दृष्ट वस्तु का बोध होता है और दोनों शब्दार्थों का एक देवदत्त व्यक्ति में बोध होता है। इसी प्रकार "तत्त्वमसि" इस वाक्य में भी अप्रत्यक्ष चैतन्य का बोधक "तत्" शब्द है और प्रत्यक्ष चैतन्य का बोधक "त्वम्" शब्द है इन दोनों शब्दार्थों का एक चैतन्यमय ब्रह्म में तात्पर्य है। यही सामानाधिकरण्य सम्बन्ध है॥७६॥

**विशेषणविशेष्यभावसम्बन्धस्तु यथा तत्रैव वाक्ये सशब्दार्थ-तत्कालविशिष्टदेवदत्तस्यायं-शब्दार्थैतत्काल-विशिष्टदेवदत्तस्य चान्योन्यभेदव्यावर्त्तकतया विशेषण-विशेष्यभावः। तथात्रापि वाक्ये तत्पदार्थपरोक्षत्वादि-विशिष्टचैतन्यस्य त्वंपदार्थापरोक्षत्वादिविशिष्टचैतन-स्यचान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः॥७७॥**

(सं० टी०) विशेषणविशेष्यभावसंबंधस्वरूपमाह। विशेषणेति। व्यावर्तक विशेषणं व्यावर्त्यं विशेष्यम्।तथा च "सोऽयं देवदत्तः" इति वाक्ये एवायंशब्दवाच्यो योसावेतत्कालैतद्देशसंबंधविशिष्टो देवदत्तपिंडः अयं स इति तच्छब्दवाच्यतत्कालतद्देशविशिष्टदेवदत्तपिंडाद्भिन्नो नेति यदा प्रतीयते तदा तच्छब्दार्थस्यायंशब्दवाच्यार्थनिष्ठभेदंव्यावर्तकतया विशेषणत्वम् अयंशब्दार्थस्य व्यावर्त्यत्वाद्विशेष्यत्वं यदा च स इति तच्छब्दवाच्यः तत्कालतद्देशविशिष्टो देवदत्तपिंडः स अयमितीमंद शब्दवाच्यादेतत्कालैतद्देशसंबंधविशिष्टादस्माद्देवदत्तपिंडान्न भिद्यत इति यदा प्रतिपद्यते तदायंशब्दवाच्यस्य तच्छब्दार्थनिष्ठभेदव्यावर्त्तकतया विशेषणत्वं तच्छब्दार्थस्य व्यावर्तकत्वाद्विशेष्यत्वं तथा चायमेव सः स एवायमिति अन्योन्यभेदव्यावर्तकतया सोऽयंशब्दार्थयोः परस्परविशेषणविशेष्यभाव इत्यर्थः। उक्तं विशेषणविशेष्यभावं दार्ष्टांतिके योजयति। तथात्रापीति। इहापि तत्त्वमसीति वाक्येऽपि त्वंपदवाच्यं यदपरोक्षत्वं किंचिज्ज्ञत्वादिविशिष्टं तत्पदवाच्यात्सर्वज्ञत्वादिविशिष्टचैतन्यान्न भिद्यते इति यदा प्रतीयते तदा तच्छब्दार्थस्य त्वंपदार्थनिष्ठभेदव्यावर्तकतया विशेषणत्वं त्वपदार्थस्य व्यावृत्यत्वात् विशेष्यत्वं यदा च तत्पदवाच्यत्सर्वज्ञात्वादिविशिष्टचैतन्यं त्वंपदवाच्यात्किंचिज्ज्ञातात्वादिविशिष्टचैतन्यान्न भिद्यत इति यदा प्रतीयते तदा त्वंपदार्थस्य तत्पदार्थनिष्ठभेदव्यावर्तकत्वेन विशेषणत्वं तत्पदार्थस्य व्यावृत्यत्वात् विशेष्यत्वं तथा च त्वं तदसि तत्त्वमसीति तत्त्वं पदार्थयोः परस्परं भेदव्यावर्तकत्वेन परस्परं विशेषणविशेष्यभाव इत्यर्थः॥७७॥

**(भा० टी०) अब विशेष्य विशेषणभाव संबंध दिखलाते हैं। जैसे पहले कहे हुए**

"सोऽयं देवदत्तः" इस वाक्य में "सः" पद का अर्थ पहले देखे हुये व्यक्ति का बोधक होता है और "अयम्" पद का अर्थ वर्तमान काल में दृष्टिगोचर वस्तु का बोधक होता है और इन दोनों पदों के अर्थों का परस्पर विशेष्य विशेषणरूप सम्बन्ध है, क्योंकि एक ही व्यक्ति में दोनों पदों के अर्थों का तात्पर्य अभिन्नरूप से मालूम होता है। इसी प्रकार 'तत्त्वमसि' इस वाक्य में भी "तत्" पद का अर्थ अप्रत्यक्ष चैतन्य और "त्वम्" पद का अर्थ प्रत्यक्ष चैतन्य है, इन दोनों पदों के अर्थों का परस्पर विशेष्य विशेषणभाव सम्बन्ध है, क्योंकि दोनों पदों के अर्थों का एक वस्तु में अभिन्नरूप से तात्पर्य मालूम होता है।।७७।।

**लक्ष्यलक्षणभावसम्बन्धस्तु यथा तत्रैव सशब्दायंशब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेन अविरुद्ध देवदत्तेन सह लक्ष्यलक्षणभावः। तथात्रापि वाक्ये तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वपरित्यागे नाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः। इयमेव भागलक्षणेत्युच्यते ।।७८।।**

(सं० टी०) क्रमप्राप्तं लक्ष्यलक्षणभावसंबंधस्वरूपं निरूपयितुमाह। लक्ष्यलक्षणेति। असाधारणधर्मप्रतिपादकं वाक्यं लक्षणवाक्यं तत्प्रतिपाद्यमवशिष्टं वस्तु लक्ष्यं तथाच सोयं देवदत्त इत्यस्मिन्नेव वाक्ये सोऽयंशब्दयोः तदर्थयोर्वा विरुद्धतत्कालतद्देशैतत्कालैतद्देशविशिष्टत्वपरिहारेणाविरुद्धदेवदत्तपिंडेन सह लक्ष्यलक्षणभावसंबंध इत्यर्थः। उक्तमथ दार्ष्टांतिके योजयति। तथात्रापीति इहापि तत्त्वंपदयोस्तदर्थयोर्वा विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेन तत्त्वंपदाभ्यां तदर्थाभ्यां वा लक्ष्याऽविरुद्धचैतन्येन सह तत्त्वंपदयोर्लक्ष्यलक्षणभावसंबंध इत्यर्थः अत्र तत्त्वंपदयोः तदर्थयोश्च त्यक्तविरुद्धांशयोर्लक्षणत्वम् अखंडचैतन्यस्य लक्ष्यत्वमिति भावः। ननु तत्त्वमस्यादिवाक्यानां लक्ष्यलक्षणभावसंबंधपुरस्कारेण चैतन्यबोधकत्वमित्युक्तम्। अन्यत्र तु शास्त्रे तेषा वाक्यानां भागलक्षणयैव चैतन्यबोधकत्वं प्रतिपाद्यते तत्त्वमस्यादिवाक्येषु लक्षणाभागलक्षणेत्यादिविरोधमाशंक्य संज्ञाभेदो न वस्तुभेद इत्याह। इयमेवेति। तत्त्वमस्यादिवाक्यानां विरुद्धांशपरित्यागेनाविरुद्धचैतन्यमात्रबोधकत्वमेव भागलक्षणेत्युच्यत इत्यर्थः ।।७८।।

(भा० टी०) अब लक्ष्यलक्षणभाव संबंध दिखलाते हैं-जैसे पहले कहे हुए "सोऽयं देवदत्तः" इस वाक्य में "सः" पद का अर्थ पूर्वकाल में दृष्टत्व है और "अयम्" पद का अर्थ वर्तमान काल में दृष्टत्व है इन परस्पर विरुद्ध दोनों अर्थों का त्याग करके केवल एक देवदत्त व्यक्ति ही लक्ष्य होता है और "सः अयम्" ये दोनों पद लक्षण

होते हैं इस कारण लक्ष्यलक्षणभाव संबंध है। इसी प्रकार "तत्त्वमसि" इस वाक्य में भी "तत्" पद का अर्थ अप्रत्यक्षत्व और "त्वम्" पद का अर्थ प्रत्यक्षत्व है। इन परस्पर विरुद्ध दोनों अर्थों का त्याग करके केवल एक अविरुद्ध चैतन्य लक्ष्य होता है और "तत् त्वम्" पद लक्षण होते हैं इसी को शास्त्रकार भागलक्षणा संबंध कहते हैं।।७८।।

**अस्मिन् वाक्ये नीलमुत्पलमिति वाक्यवद्वाक्यार्थो न संगच्छते ।तत्र नीलपदार्थनीलगुणस्य उत्पलपदार्थोत्पल-द्रव्यस्य च शुक्लपदादिव्यावर्त्तकतवाऽन्योन्यविशेष्य-विशेषणरूपसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य वा तदै-क्यस्य वाक्यार्थत्वांगीकरणे प्रमाणान्तरविरोधाभावाद्वा-क्यार्थः संगच्छते । अत्र तु तत्पदार्थपरोक्षत्वादिविशिष्ट-चैतन्यस्यत्वम्पदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावसंसर्गस्य अन्यतरविशिष्टस्यान्यतरस्य वा तदैकस्य वाक्यार्थ-त्वांगीकारे प्रत्यक्षादिप्रमाणविरोधाद्वाक्यार्थो न संगच्छते ।।७९।।**

(सं० टी०) ननु यथा नीलोत्पलमिति वाक्ये नीलत्वविशिष्टनीलगुणस्य उत्पलत्वविशिष्टोत्पलद्रव्यस्य च स्वव्यतिरिक्तशुक्लादिगुणांतरपटादिद्रव्यांतर-व्यावर्त्तकत्वेन विशेषणविशेष्यभावनिरूपिततद्भिन्नसंसर्गस्य नीलगुणवैशिष्ट्यस्य वा वाक्यार्थत्वं तथेहापि तत्त्वमस्यादिवाक्ये तत्पदार्थस्य परोक्षत्वादिविशिष्टेश्वर-चैतन्यस्य त्वंपदार्थस्यापरोक्षत्वादिविशिष्टजीवचैतन्यस्य चान्योन्यभेदव्यावर्तकतया विशेषणाविशेष्यभूतसर्वज्ञत्वकिंचिज्जत्वोभयनिरूपितसंसर्गो वा सर्वज्ञात्वादिवि-शिष्टस्य किंचिज्ज्ञत्वादिविशिष्टेन सहैक्यं वा वाक्यार्थो भवत्वित्याशंक्य दृष्टांत-दार्ष्टांतिकयोर्वैषम्यान्नैवमित्याह अस्मिन्नित्यादिना।अस्मिन्निति ।अस्मिंस्तत्त्वमसीति वाक्ये नीलोत्पलमित्यादिवाक्यवत्संसर्गो वा विशिष्टो वा वाक्यार्थेन संगच्छत इत्यर्थः । नीलोत्पलमिति वाक्यस्य संसर्गवैशिष्ट्यार्थप्रतिपादकत्वकल्पने विरोधा-भावं दर्शयति । तत्र त्विति । नीलोत्पलपदार्थयोर्गुणगुणिनोर्विशेषणविशेष्यभाव-संसर्गस्य नीलगुणविशिष्टोत्पलयोरैक्यस्य वा वाक्यार्थत्वांगीकारे प्रत्यक्षादिप्रमाणां-तरविरोधाभावात्तत्र तथा संगच्छत इति भावः । तत्त्वमसीतिवाक्ये तु तत्त्वंपदार्थयोः किंचिज्ज्ञत्वादिविशिष्टजीवचैतन्यस्य सर्वज्ञत्वादिविशिष्टेश्वरचैतन्यस्य चान्योन्य-विशेषणविशेष्यभावसंसर्गस्य तदुभयविशिष्टचैतन्यैकस्य वा वाक्यार्थत्वांगीकारे

प्रत्यक्षादिप्रमाणांतरविरोधात्पूर्वस्माद्वैषम्यं दर्शयति । अत्र त्विति ।।७९।।

(भा० टी०) "नीलमुत्पलं" इस वाक्य से जैसा वाक्यार्थ होता है, उस प्रकार "तत्त्वमसि" इस वाक्य का वाक्यार्थ संगत नहीं होता है, क्योंकि "नीलमुत्पलम्" इस वाक्य में नील पद का अर्थ नीलगुण है और उत्पल पद का अर्थ उत्पल द्रव्य है यह दोनों शुक्लत्वादि गुण और घटपटादिद्रव्य के व्यावर्त्तक हैं इस कारण परस्पर विशेष्यविशेषण भाव सम्बन्ध अथवा एकको दूसरे के संग वाक्यार्थ संगति होती है इस प्रकार "तत्त्वमसि" इस वाक्य में सर्वज्ञत्व और किञ्चिज्ज्ञत्व में प्रत्यक्षादि प्रमाण का विरोध होने से "नीलमुत्पलम्" इसके वाक्यार्थ की तरह "तत्त्वमसि" इसका वाक्यार्थ संगत नहीं होता है।।७९।।

**अत्र तु गंगायां घोषः प्रतिवसतीतिवज्जहल्लक्षणा न संगच्छते। तत्र तु गंगाघोषयोराधाराधेयभावलक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद्वाच्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा संगच्छते। अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वरूपस्य वाक्यार्थस्य भागमात्रे विरोधाद्भागान्तरमपरित्यज्या-न्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न संगच्छते।।८०।।**

(सं० टी०) ननु तत्त्वमस्यादिवाक्यमखंडार्थं कथं बोधयति जहल्लक्षणया वा किमजहल्लक्षणया आहोस्विज्जहदजहल्लक्षणयेति त्रिधा विकल्पः। आद्ये दूषणमाह। अत्र त्विति । तत्त्वमसीति वाक्ये जहल्लक्षणा न संगच्छत इत्यन्वयः । तदेव दर्शयितुं जहल्लक्षणाया उदाहरणं तावदाह । गंगायामिति । मानान्तरविरोधे तु मुख्यार्थस्यापरिग्रहे "मुख्यार्थेनाविनाभूते प्रवृत्तिर्लक्षणेष्यते" इति वचनाद्गंगायां घोषवत्त्वासंभवाद्गगायां घोष इति वाक्यस्य मुख्यार्थविरोधे मति मुख्यार्थं परित्य-ज्य लक्षणया वृत्त्या तत्संबंधिनि तीरे घोषावस्थानप्रतिपादनात्तत्र जहल्लक्षणां-गीकारो युज्यत इत्याह । तत्र त्विति । तत्र तु गंगाघोषयोराधाराधेयभावलक्षणां सर्वथा परित्यज्येत्यर्थः । तत्त्वमसीति वाक्ये प्राक्प्रतिज्ञातं जहल्लक्षणासंभमा-विष्करोति । अत्र त्विति । तुशब्दः पूर्वस्माद्वैषम्यं द्योतयति । तत्त्वमसीति वाक्ये परोक्षत्वापरोक्षत्वविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य विरोधाभावात्परोक्ष-त्वापरोक्षत्वप्रतिपादकत्वांशे विरोधाच्चैतन्यैकत्वे विरोधाभावाद्गंगाघोषादि-वाक्यवत्सर्वात्मना मुख्यार्थपरित्यागासंभवाज्जहल्लक्षणा न संभवतीत्यर्थः । तत्र हेतुमाह । भागांतरमिति । विरुद्धयोः परोक्षत्वापरोक्षत्वयोरेकत्वासंभवेन तत्परि-त्यागेऽपि चैतन्यभागस्यैकत्वे विरोधाभावात् त्यागो न युज्यत इत्यर्थः ।।८०।।

(भा० टी०) जैसे "गंगायां घोषः प्रतिवसति इस वाक्य में जहत्स्वार्थलक्षणा वृत्ति से वाक्यार्थ संगत होता है, उस प्रकार "तत्त्वमसि" इस वाक्य का जहत्स्वार्थलक्षणा द्वारा वाक्यार्थ संगत नहीं होता है, क्योंकि "गंगायां घोषः प्रतिवसति" इस वाक्य में भगीरथरथखातावच्छिन्न जलप्रवाहरूप गंगा और घोष (आभीरपल्ली) इनका आधाराधेयभाव असंभव होने से वाक्यार्थ बाधित होता है इस कारण विरोध दूर करने के अर्थ तात्पर्य की अनुपपत्ति होने से गंगा पद का शक्यार्थ जो भगीरथरथखातावच्छिन्न जलप्रवाह उसका परित्याग करके लक्षणा-द्वारा गंगा के समीपवर्त्ती गंगातीर में गंगापद का अर्थ युक्तिद्वारा कल्पना किया जाता है। इस प्रकार शब्द का मुख्य अर्थ परित्याग करके अन्य अर्थ का स्वीकार करना लक्षणा अर्थात् जहत्स्वार्थलक्षणा होती है। उस प्रकार "तत्त्वमसि" इस वाक्य में प्रत्यक्ष और अप्रत्यक्ष इन दोनों के ऐक्यस्वरूप वाक्यार्थ में कोई विरोध नहीं है केवल प्रत्यक्ष और अप्रत्यक्ष को प्रतिपादक अंश विरोध है। सो शक्यार्थ को परित्याग करके लक्ष्यार्थ स्वीकार नहीं करते हैं। इसी कारण "तत्त्वमसि" इस वाक्य में अजहत्स्वार्थलक्षणा संगत नहीं होती है॥८०॥

**न च गङ्गापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति तथा तत्पदं त्वं पदं वा वाच्यार्थपरित्यागेनत्वंपदार्थं तत्पदार्थं वा बोधयतु तत् कुतोऽजहल्लक्षणा न सङ्गच्छते इति वाच्यम् । तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि तत्त्वंपदयोः श्रुयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनः अन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाभावात् श्रुतवाक्यस्य मुख्यार्थविरोधे मुख्यार्थसम्बधिन्यश्रुतपदार्थे लक्षणेति सर्वजनप्रसिद्धम् ॥८१॥**

(सं० टी०) ननु यथा गंगायां घोषः प्रतिवसतीति वाक्ये गंगापदं प्रवाहलक्षणा-स्वार्थं परित्यज्य स्वसंबंधितीरपदार्थं लक्षयति, तथा तत्त्वमसीति वाक्ये तत्पदं स्वार्थे परोक्षत्वविशिष्टं परित्यज्य जीवचैतन्यं लक्षयतु एवं त्वंपदमपि स्वार्थे किंचिज्ज्ञत्वा-दिविशिष्टं परित्यज्येश्वरचैतन्यं वा लक्षयतु तस्माज्जहल्लक्षणैव भवतीत्याशक्य निराकरोति । न चेति । निराकरणप्रकारमेवाह । तत्रेति । तथा च गंगायां घोष इत्यत्र श्रुतवाक्यार्थस्य गंगाघोषयोराधाराधेयभावसंबंधस्य विरोधे सति श्रूयमाणं गंगापदं स्वार्थपरित्यागेन तीरपदार्थं लक्षयतीति युक्तं गंगापदार्थस्य तीरपदार्थप्रती-तिसापेक्षत्वादिहेतुश्रूयमाणतत्त्वंपदयोर्मुख्यतयैव तदर्थसर्वज्ञत्वकिंचिज्ज्ञत्वादिवि-

शिष्टप्रतीतौ सत्यामपि लक्षणया तत्पदेन त्वंपदार्थप्रतीत्यपेक्षाभावात्त्वंपदेन तत्पदार्थप्रतीत्यपेक्षाभावाच्च मुख्यार्थे संभवति लक्षणाया अन्याय्यत्वाज्जहल्लक्षणा न संभवतीत्यर्थः ॥८१॥

(भा० टी०) जैसे गङ्गापद का वाच्यार्थ परित्याग के लक्षण द्वारा तीर अर्थ ग्रहण किया जाता है उसी प्रकार लक्षणा द्वारा तत्पद का वाच्यार्थ परित्याग करके त्वंपदार्थ में अथवा त्वंपद का परित्याग करके तत्पदार्थ में लक्षित हो जाय। तब तो "तत्त्वमसि" वाक्य में भी जहत्स्वार्थलक्षणा सङ्गत हो जायगी। सो ठीक नहीं है क्योंकि "गंगायां घोषः" इस वाक्य में तीर शब्द का उच्चारण नहीं है इस कारण तीर अर्थ की अपेक्षा करके जहत्स्वार्थलक्षणा सङ्गत होती है। परंतु "तत्त्वमसि" इस वाक्य में "तत्" और 'त्वं' यह दोनों पदार्थ युक्त हैं और दोनों के अर्थ प्रसिद्ध हैं इस कारण यहां लक्षणा द्वारा अन्य पद को अन्यतर अर्थ की आवश्यकता नहीं है इस कारण "तत्त्वमसि" वाक्य में जहत्स्वार्थलक्षणा असङ्गत होती है, कारण कि, जो कोई वाक्य सुना जाता है, उस वाक्य का मुख्य अर्थ समझने में विरोध आवे तो, वहां उस मुख्य अर्थ के संबंधी, नहीं सुने हुए पदार्थ में उस मुख्य अर्थ की लक्षणा करना, यह बात तो सर्व लोकों में प्रसिद्ध है॥८१॥

**अत्र शोणो धावतीति वाक्यवदजहल्लक्षणापि न सङ्गच्छते । तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणायां तद्विरोधपरिहारसम्भवादजहल्लक्षणा सम्भवति अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तत्सम्बन्धिनो यस्य कस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोधाऽपरित्यागादजहल्लक्षणापि न सम्भवत्येव ॥८२॥**

(सं० टी०) द्वितीयं पक्षं दूषयति अजहल्लक्षणापि न संभवतीत्याह । अत्र शोणो धावतीति । अत्र तत्त्वमसीति वाक्ये शोणोधावतीति वाक्यवत् अजहल्लक्षणापि न संभवतीत्यन्वयः । कुत इत्यत आह । तत्रेति । तत्र शोणो धावतीत्यादिवाक्ये शोणगुणस्य गमनासंभवेन वाक्यस्य मुख्यार्थविरोधे सति श्रूयमाणशोणपदं स्वार्थापरित्यागेन स्वाश्रयमश्वादिकं लक्षयतीति युक्तम् । अत्र त्विति । अत्र तत्त्वमस्यादिवाक्ये तत्त्वंपदार्थस्य परोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य मुख्यवाक्यार्थस्य विरुद्धत्वात्परोक्षत्वापरोक्षत्वाद्यपरित्यागेन तत्तद्विशिष्टचैतन्यलक्षणार्थस्य लक्षितत्वेऽपि तद्विरोधपरिहाराभावादजहल्लक्षणा न संभवतीत्यर्थः ॥८२॥

(भा० टी०) और "शोणो धावति" इस वाक्य में जिस प्रकार अजहत्स्वार्थलक्षणा संगत होती है उस प्रकार "तत्त्वमसि" वाक्य में अजहत्स्वार्थलक्षणा भी संगत नहीं है। क्योंकि "शोणो धावति" इस वाक्य में शोण (लालरंग) गुण की गमनक्रिया बाधित है इस कारण शोणपद शक्यार्थ को विना परित्याग करके अर्थात् रक्तिम अर्थसहित लक्षणाद्वारा शोणगुणविशिष्ट अश्वादिक में लक्षित होता है तब गमन क्रिया का विरोध नहीं होता है इसी कारण "शोणो धावति" इस वाक्य में अजहत्स्वार्थलक्षणा संगत होती है। परंतु "तत्त्वमसि" इस वाक्य में प्रत्यक्ष और अप्रत्यक्ष चैतन्य के प्रत्यक्ष रूप वाक्यार्थ में प्रत्यक्ष और अप्रत्यक्ष के प्रतिपादक अंश के विरोध के कारण विरुद्ध अंश का विना परित्याग किये लक्षणा द्वारा उसका सम्बन्धी जो कोई अर्थ लक्षित होकर विरोध दूर नहीं होता है इस कारण अजहत्स्वार्थलक्षणा असंगत है॥८२॥

**न च तत्पदं त्वम्पदं वा स्वार्थविरुद्धांशपरित्यागेनांशान्तरसहितं तत्पदार्थं त्वंपदार्थं वा लक्षयतु । अतः कथं प्रकारान्तरेण भागलक्षणाङ्गीकरणमिति वाच्यम् । एकेन पदेन स्वार्थांशपदार्थान्तरोभयलक्षणाया असम्भवात् पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनरन्यतरपदार्थप्रतीत्यपेक्षाभावाच्च ॥८३॥**

(सं० टी०) ननु तत्पदं स्वार्थं विरुद्धपरोक्षत्वादिधर्मं परित्यज्याविरुद्धचैतन्यांशापरित्यागेन त्वंपदार्थं किंचिज्ज्ञत्वादिविशिष्टं जीवचैतन्यं लक्षयतु त्वंपदं वा स्वार्थविरुद्धापरोक्षत्वादिधर्मं परित्यज्याविरुद्धचैतन्यांशापरित्यागेन तत्पदार्थं सर्वज्ञत्वादिविशिष्टमीश्वरचैतन्यं लक्षयतु किं भागलक्षणांगीकारेणेत्याशंक्य निराकरोति । नचेति । एकेन तत्पदेन त्वंपदेन वा स्वार्थांशपरित्यागपदार्थान्तरस्वीकारोभयलक्षणासंभवादित्यर्थः । अजहल्लक्षणासंभवे हेत्वंतरमाह । पदांतरेणेति । तत्पदेन त्वंपदेन वा तत्तदर्थप्रतीतौ सत्यां लक्षणया पुनरन्यतरस्यान्यतरप्रतीत्यपेक्षाभावादित्यर्थः । अतः परिशेषात् ॥८३॥

(भा० टी०) और यह भी नहीं कह सकते कि "तत्" वा "त्वम्" पदार्थ का स्वस्वविरुद्ध अर्थात् परित्याग करके अविरुद्ध अर्थ के सहित "तत्" वा "त्वम्" पद का अर्थ लक्षित होकर भागलक्षणा का स्वीकार करना भी निष्फल है। क्योंकि एक पद के द्वारा स्वस्व अविरुद्ध अंश का परित्याग और अन्य पदार्थ इन दोनों अर्थों का लक्षणा से होना असम्भव है। तथा अन्य पदद्वारा जो अर्थ प्रतीत होता है लक्षणद्वारा दूसरे को उससे अन्य पदार्थ का बोध नहीं हो सकता॥८३॥

**तस्माद्यथा सोऽयं देवदत्त इति वाक्यं तदर्थो वा तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाच्यार्थस्यांशविरोधात् । विरुद्धंतत्कालैतत्कालविशिष्टत्वांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति । तथा तत्त्वमसीति वाक्यं तदर्थो वा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाच्यार्थस्यांशविरोधाद्विरुद्धपरोक्षत्वापरोक्षत्वाविशिष्टां दिशं परित्यज्याविरुद्धमखण्डचैतन्यमात्रं लक्षयति ॥८४॥**

(सं० टी०) तृतीयपक्ष एव चांगीकर्तव्य इत्युपसंहरति । तस्मादिति । यस्मात्तत्वमस्यादिवाक्ये जहल्लक्षणाज्जहल्लक्षणयोरसंभवः तस्माज्जहदजहल्लक्षणया विरुद्धांशं परित्यज्याविरुद्धाखंडचैतन्यमात्रं लक्षयतीति योजना । तत्र दृष्टांतमाह । यथेति । यथा सोयं देवदत्त इति वाक्ये प्रागुक्तजहल्लक्षणाजहल्लक्षणयोरसंभवेन तदर्थस्य तत्कालतद्देशविशिष्टस्य इदमर्थस्यैतत्कालैतद्देशविशिष्टदेवदत्तलक्षणवाक्यार्थस्यैकस्मिन्नंशे तत्काले तत्कालवैशिष्टचभागे विरोधदर्शनात्तत्परित्यागेनाविरुद्धदेवदत्तपिंडमात्रं लक्षयतीत्यर्थे न मानांतरविरोध इत्युक्तन्यायेनेत्यर्थः । उक्तमर्थं दार्ष्टांतिके योजयति । तथेति । तत्त्वमसीत्यादिवाक्यस्यापि परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणमुख्यार्थप्रतिपादकत्वासंभवाज्जहदजहल्लक्षणया विरुद्धपरोक्षत्वादिवैशिष्टचांशपरित्यागेनाविरुद्धाखण्डचैतन्यमात्रप्रतिपादकत्वं तस्येत्यर्थः ॥८४॥

**(भा० टी०) जैसे "सोऽयं देवदत्तः" इस वाक्य में पूर्वकाल में देखा हुआ और वर्तमानकाल में देखा हुआ जो देवदत्तरूप वाच्यार्थ उसका एक अंश में विरोध होने से विरुद्ध अंश जो पूर्वकाल है उसमें और वर्तमान काल में है उसका परित्याग करके देवदत्त रूप अंश लक्ष्यार्थ होता है। उसी प्रकार "तत्त्वमसि" इस वाक्य में प्रत्यक्ष और अप्रत्यक्ष चैतन्य का ऐक्यरूप जो वाच्यार्थ है उसके एकांश में विरोध होने से विरुद्ध अंश जो प्रत्यक्षत्व और अप्रत्यक्षत्व उसका परित्याग करके अविरुद्ध अखण्ड चैतन्यांशमात्र लक्ष्यार्थ होता है॥८४॥**

**अथाधुना अहं ब्रह्मास्मीत्यनुभववाक्यार्थो वर्ण्यते । एवमाचार्येणाध्यारोपापवादपुरःसरं तत्त्वम्पदार्थौ शोधयित्वा वाक्येनाखण्डार्थेवबोधितेऽधिकारिणोऽहंनित्य-शुद्ध-बुद्ध-मुक्त-सत्य-स्वभाव-परमानन्दा-नन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिता चितवृत्तिरुदेति ।सा तु चित्प्र-**

**तिबिम्बसहिता सती प्रत्यगभिन्नमज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते तदा पटकारणतन्तुदाहेपटदाहवदखिलकार्यकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात् तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति ॥८५॥**

(सं० टी०) अखंडचैतन्यप्रतिपादकस्य तत्त्वमसीतिवाक्यस्यार्थं सप्रपंचमभिधायेदानीं यजुर्वेदानुभववाक्ययार्थो वर्ण्यते इत्याह । अथाधुनेति । गुरुमुखान्नवक्तृत्वः तत्त्वमस्यादिवाक्यश्रवणाद्देहाद्यहंकारान्तजडपदार्थसकलदृश्यविलक्षणप्रत्यगात्मनः शुद्धेन परमात्मना सहैकत्वबोधानंतरं कश्चिदधिकारी लब्धावसरं सर्वोपाधिविनिर्मुक्तं सच्चिदानंदैकरसमनुभवेन जिज्ञासुराचार्योपदिष्टमहं ब्रह्मास्मीति वाक्यार्थमनुस्मरन् स्वात्मानंदैकरसमनुभवतीत्यर्थः । तत्प्रकारमेवाह । एवमित्यादिना । एवं संक्षेपेण । प्रमाणवक्ष्यमाणप्रकारेणाधिकारिणः चित्तवृत्तिरुदेतीति संबंधः । कदेत्यपेक्षायामाह । आचार्येणेति । आचर्येणाविषयेऽसंगे निष्कलचैतन्ये शशशृंगायमानाऽविद्याहंकारादिशरीरांतं मिथ्यापदार्थमध्यारोप्य तदपवादपुरःसरं तत्त्वंपदार्थौ शोधयित्वा तत्त्वमसीतिवाक्येन जहदजहल्लक्षणया विरुद्धांशपरित्यागेनाखंडार्थचैतन्यं ज्ञाते सतीत्यर्थः । किंविषयिणी चित्तवृत्तिरुदेतीत्याशंकां निवारयति । अहमिति । अहं प्रत्यगात्मा परं ब्रह्मास्मीत्यन्वयः । ब्रह्मानित्यत्वशंकां निराकरोति । नित्येति । शुद्धपदेनाऽविद्यादिदोषराहित्यं बुद्धपदेन स्वप्रकाशस्वरूपत्वं मुक्तपदेन सर्वोपाधिराहित्य सत्यपदेनाविनाशिस्वभावत्वं परमानंदपदेन वैषयिकमनुष्यानंदादिचतुर्मुखब्रह्मानंदपर्यंतानां कर्मजन्यत्वेन सातिशयत्वेन क्षणिष्णुत्वेन च तुच्छत्वात्तेभ्यो विलक्षणं निरतिशयानंदस्वरूपत्वं प्रतिपाद्यते अनंतपदेन घटादिवत्परिच्छेदराहित्येन देशतः कालतो वस्तुतश्चापरिच्छिन्नत्वं बोध्यते । अद्वयमिति । नानात्वनिषेधेन एकत्वं बोध्यत इत्यर्थः । ननु यथा दीपप्रभादित्यमंडलं न व्याप्नोति न च प्रयोजनमस्ति तथा नित्यशुद्धस्वप्रकाशमात्मानं जडचित्तवृत्तिरेकं विषयीकृत्योदेति । किं प्रयोजनं चेत्याशंक्याह । सा त्विति । सा चित्तवृत्तिर्न शुद्धब्रह्मविषयिणी किंत्वज्ञानविशिष्टप्रत्यगभिन्नपरब्रह्मविषयिणी सा च चैतन्यप्रतिबिंबसंवलिता सती चैतन्यगतमज्ञानं निवर्तयति तस्याः चैतन्यावरका न निवृत्तिरेव प्रयोजनमित्यर्थः । नन्वधिकारिणः तत्त्वमस्यादिवाक्यश्रवणोत्पन्नाऽखंडचैतन्यवृत्त्या तदाश्रिताज्ञाननिवारितेऽपि तत्कार्यस्य सकलचराचरात्मकप्रपंचस्य प्रत्यक्षतया भासमानत्वात्कथमद्वैतसिद्धिरित्याशंक्य कारणाज्ञाननाशे तत्कार्यसकलप्रपंचनाशादद्वैतसिद्धिरित्येतत्सदृष्टांतमाह । यथेति । नन्वज्ञाननाशे तत्कार्यप्रपंचस्य नाशोऽस्तु तथाप्यखंडाकारचित्तवृत्तेरनिवृत्तैरद्वैतहानिरित्याशंक्याह । तदंतर्भूतेति ।अखंडाकारवृत्तेरपि

अज्ञानतत्कार्यान्तर्भूतत्वाच्चित्तवृत्त्या तन्निवृत्तेर्नाद्वैतहानिरित्यर्थः ॥८५॥

**(भा० टी०) अब 'अहं ब्रह्मास्मि' इस अनुभववाक्य का अर्थ लिखते हैं। आचार्य पहले कहे हुए अध्यारोप और अपवादन्याय के द्वारा "तत्" और "त्वम्" इन दोनों पदों के अर्थ का शोधन करके जिस समय "तत्त्वमसि" इस वाक्य द्वारा अखण्ड चैतन्य का बोध हो जाता है उस समय में नित्य, शुद्ध, बुद्ध, मुक्त, सत्यस्वरूप, परमानान्द, अद्वितीय, ब्रह्म हूँ, इस प्रकार अखण्ड अन्तःकरणवृत्ति होती है वह अन्तःकरणवृत्ति चैतन्यप्रतिबिंबित होती है तब वह चित्तवृत्ति चैतन्य द्वारा प्रकाशित होकर प्रत्यगात्मा (जीव ब्रह्म का अभेद ज्ञान) और अभिन्न परब्रह्म विषयक अज्ञान का नाश कर देती है! जैसे वस्त्र के तन्तु का नाश होने से वस्त्र नष्ट हो जाता है वैसे सम्पूर्ण संसार के कारण अज्ञान का नाश होने से तदन्तर्गत अखण्डाकार अन्तःकरण की वृत्ति भी नष्ट हो जाती है॥८५॥**

**तत्र वृत्तौ प्रतिविम्बितं चैतन्यमपि यथा प्रदीपप्रभा आदित्यप्रभावभासनसमर्था सती तयाभिभूता भवति तथा स्वयंप्रकाशमानप्रत्यगभिन्नपरब्रह्मावभासनानर्हतया तेनाभिभूतं सत् स्वोपाधिभूताखण्डवृत्तेर्बोधितत्वाद्दर्पणाभावे मुखप्रतिबिम्बस्य मुखत्वमात्रवत्प्रत्यगभिन्नपरब्रह्ममात्रं भवति ॥८६॥**

(सं० टी०) ननु तथाप्यखंडाकारवृत्तिप्रतिबिंबितचैतन्याभासस्य सत्त्वात्कथमद्वैतसिद्धिरित्याशंक्याह । तत्रेति । वृत्तिनिवृत्तौ तत्प्रतिबिंबितचैतन्यस्य बिंबावभासनासमर्थत्वाद्वृत्त्युपाधिबाधेन तत्प्रतिबिंबचैतन्यमपि चैतन्यमात्रतयावशिष्यते दर्पणोपाधिविगमे तत्प्रतिबिंबतमुखाभासस्य बिंबीभूतमुखमात्रतावशेषवदित्यर्थः । अयं भावः । शोधिततत्त्वंपदार्थस्याधिकारिणः तद्विजृंभितगुरुशास्त्रादिभ्यः तत्त्वमसीत्युपदेशेन अहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानंदानंताद्वयाखंडं ब्रह्मास्मीति चित्तवृत्तिरुदयमासादयति तदानीमेव तस्यामभिव्यक्ताखंडचैतन्यबलेन तत्परिपीडिताज्ञाननाशो भवति तदानीं तत्कार्यस्य सर्वस्य नाशादभिव्यंजकवृत्तिरपि स्वयमेव कनकरजोवद्दारुमथनजनिताग्निवदुदरस्थदुष्टजलशांत्यर्थं पीततप्तजलवच्च नष्टा भवति तदानीं तद्गताभासोऽपि स्वोपाधिभूतवृत्तिनाशात्स्वप्रकाशात्मावभासमानासमर्थतया दर्पणविगमे तदुपाधिकस्य स्वाधिष्ठानमुखमात्रत्ववदधिष्ठानमात्रो भवतीति वेदान्तसिद्धांतरहस्यमिति । अत्र तस्यानुभवः । "लोकाश्च भांति परमे मयि मोहजन्याः स्वप्नेंद्रजालमरुनीरसमाविचित्राः ॥ व्युत्थानकाल इहं न स्युरलं विशुद्धप्रत्यङ्मुखाब्धिपरमामृतचित्तवृत्तौ ॥१॥ मत्तः परं न खलु विश्वमथापि भाति मध्ये च पूर्वमपरं नरशृंगतुल्यम् । मायोत्थशास्त्रगुरुवाक्यसमुत्थबोधभानुप्रभा

विलसते क्व गतं न जाने ॥२॥ निरतिसयसुखाब्धौ स्वप्रकाशे परेस्मिन् कथमिदमविवेकादुत्थितं स्रक्फणीव ॥ क्व नु गतमधुना तद्देशिको वा श्रुतिर्वा परमविमलबोधेऽभ्युत्थितेऽहं न जाने ॥३॥" तदेतत्सर्वं मनसि निधायोपसंहरति । प्रत्यगभिन्नेति ॥८६॥

**(भा० टी०) जैसे दीपक की प्रभा सूर्य की प्रभा के प्रकाश होने पर असमर्थ होकर अपने आप निष्प्रभ हो जाती है उसी प्रकार अन्तःकरण वृत्ति में प्रतिबिम्बित चैतन्य स्वप्रकाश स्वरूप ब्रह्मचैतन्य के प्रकाश करने को समर्थ नहीं होता है और स्वप्रकाश ब्रह्म चैतन्य से स्वयं अभिभूत हो जाता है। और जैसे दर्पण के न होने पर मुखप्रतिबिम्ब मुख ही रहता है, इसी प्रकार उपाधिभूत अन्तःकरण वृत्ति के न होने पर स्वप्रकाश परब्रह्म मात्र ही रहता है इस प्रकार ज्ञानियों को "मैं ब्रह्म हूँ" इस प्रकार अनुभव होता है॥८६॥**

**एवञ्च सति "मनसैवानुद्रष्टव्यम् । यन्मनसा न मनुते" इत्ययोः श्रुत्योरविरोधः । वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् । उक्तं च "फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" ॥ इति ॥ स्वयंप्रकाशमानत्वान्नाभास उपयुज्यत इति ॥८७॥**

(सं० टी०) ननु "मनसैवानुद्रष्टव्यं मनसैवेदमवाप्तव्यं दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः । बुद्ध्यवलोकनसाध्येऽस्मिन्वस्तुन्यस्तमिता यदि । बुद्धियोगमुपाश्रित्य मच्चितः सततं भव" इत्यादिश्रुतिस्मृतीनां "यतोवाचो निवर्तन्ते अप्राप्य मनसासह । यन्मनसा न मनुते अन्यदेव तद्विदितादथोऽविदितादधीहि । अविज्ञातं विजानतां विज्ञातमविजानताम् । अनाशिनोप्रमेयस्य । यद्विज्ञातं त्वया विप्र यन्न विज्ञातमात्मना । ताभ्यामन्यत्परं विद्धि यद्वेद्यं तज्जडम्" इत्यादिश्रुतिस्मृतीनां परस्परविरोधमाशंक्य परिहरति । एवमिति । एवमुक्तप्रकारेण अज्ञातचैतन्यस्य वृत्तिव्याप्यत्वांगीकारेण फलव्याप्यत्वे प्रतिषिद्धे सतीत्यर्थः । तदेवाह-वृत्तिव्याप्यत्वेति । अंतःकरणवृत्तिरावरणनिवृत्त्यर्थमज्ञानावच्छिन्नं चैतन्यं व्याप्नोतीत्येतद्वृत्तिव्याप्यत्वमंगीक्रियते आवरणभंगानंतरं स्वयं प्रकाशमानं चैतन्यं फलचैतन्यमित्युच्यते तस्मिन्फलचैतन्ये निष्फला काचिद्वृत्तिर्न व्याप्नोति आवरणभंगस्य प्रागेव ज्ञातत्वेन प्रयोजनाभावादित्यर्थः । अस्मिन् ग्रन्थे ग्रंथांतरं संवादयति । तदुक्तमिति । वृत्तिप्रतिबिम्बितचैतन्याभासस्यापि फलचैतन्यप्रकाशत्वं नेत्यत्रापि संमतिमाह । स्वयमिति ॥८७॥

(भा० टी०) पूर्वोक्त अनुभव प्रकार सिद्ध होने पर "ब्रह्म मन करके धारण किया जाता है। ब्रह्म मन से धारण नहीं किया जाता है।" इन परस्पर विरुद्ध दोनों श्रुतियों का विरोध भी दूर हो गया। क्योंकि मनोवृत्ति द्वारा ब्रह्मविषयक अज्ञान का नाश होता है किंतु अन्तःकरणवृत्ति में प्रतिबिम्बित चैतन्य परब्रह्म का प्रकाश नहीं कर सकता। इस विषय में प्रमाण भी है शास्त्रकारों ने अन्तःकरण प्रतिबिम्बित चैतन्य के द्वारा परब्रह्म चैतन्य के प्रकाश के निषेधपूर्वक अन्तःकरणवृत्ति के द्वारा तद्विषयक अज्ञान का नाश होना स्वीकार किया है क्योंकि परम ब्रह्म स्वप्रकाशस्वरूप है। इसी कारण उसका प्रकाश दूसरे का किया हुआ नहीं हो सकता है।।८७।।

**जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति । तथाहि अयं घट इति घटाकाराकारितचित्तवृतिज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जडमपि घटं भासयति । तदुक्तम्-"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।। तत्राज्ञानं धिया नश्येदाभासेन घटं स्फुरेत्" इति । यथा प्रदीपप्रभा मण्डलमन्धकारगतं घटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदवभासयतीति ।।८८।।**

(सं० टी०) इदानीं जडपदार्थविषयकचित्तवृत्तेर्ब्रह्माकारवृत्त्यपेक्षया वैलक्षण्यं दर्शयितुमाह । जडपदार्थेति. । अहं ब्रह्मास्मीत्यज्ञानावच्छिन्नब्रह्माकारा चित्तवृत्तिस्तदावरकमज्ञानमात्रं निवर्तयति । ब्रह्म तु स्वप्रकाशात्मत्वात्स्वयमेव प्रकाशते न तु वृत्तिप्रतिबिंबितचिदाभासेन चैतन्यं प्रकाश्यते तत्र तस्यासामर्थ्यात् । अयं घट इति घटाकाराकारितचित्तवृत्तिस्तु घटावच्छिन्नचैतन्यावरकमज्ञानं निवर्त्य निवर्तमाना स्वप्रतिबिंबितचिदाभासेन जडं घटमपि प्रकाशयति । अतः ततो विशेषोऽस्तीत्यर्थः । एतदेव प्रपंचयितुं प्रतिजानीते । तथाहीति । जडपदार्थविषयिणीं चित्तवृत्तिमभिनीय दर्शयति । अयमिति । वृत्तिसंबंधात्प्राग्घटस्याज्ञातत्वात् अज्ञानं घटं विषयीकृत्य प्रवृत्ताचित्तवृत्तिर्घटगताज्ञानं दूरीकुर्वाणा घटमपि भासयतीत्यर्थः । अस्मिन्नर्थे वृद्धसंमतिमाह । तदुक्तमिति । बुद्धिश्च तत्र बुद्धौ प्रतिबिंबितचिदाभासश्च बुद्धितत्स्थचिदाभासौ द्वावेतौ बुद्धिचिदाभासौ घटं व्याप्नुतः । तत्र तयोर्मध्ये धिया वृत्त्या घटाज्ञानं नश्येच्चिदाभासेन तु घटः स्फुरेदित्यर्थः । अत्रानुरूपं दृष्टांतमाह । यथेति । यथांधकारावस्थितघटादिकं विषयीकृत्य प्रवर्तमानं दीपप्रभामंडलं घटपटावरकांधकारनिरसनपुरःसरं स्वप्रभया तदपि भासयति तद्वदित्यर्थः ।।८८।।

(भा० टी०) अखण्डाकार अन्तःकरण की वृत्तिसे घटादि जड़ पदार्थाकार अन्तःकरण की वृत्ति का कुछ विशेष है। घट का प्रत्यक्ष होने के समय घटाकार चित्तवृत्ति अज्ञात घटको विषय करके उसके अज्ञान का नाश करती हुई अन्तःकरणवृत्ति के प्रतिबिम्ब द्वारा अर्थात् स्वगत चिदाभास के द्वारा घट का प्रकाश करती हैं। इस विषय में प्रमाण भी है-"अन्तःकरणवृत्ति और तद्गत् प्रतिबिम्बित चैतन्य यह दोनों ही घट को प्राप्त होते हैं परंतु अन्तःकरण की वृत्तिद्वारा घट के अज्ञान का विनाश होता है और प्रतिबिम्बित चैतन्य द्वारा घट प्रकाशित होता है। जैसे दीपक की प्रभा अन्धकार में रक्खे हुए घटपटादि को प्राप्त होकर घटपटादिगत अन्धकार का विनाश करके उनका प्रकाश करती है। उसी प्रकार अन्तःकरण की वृत्तिद्वारा घटादि का अज्ञान नष्ट होता है और अन्तःकरण प्रतिबिम्बित चैतन्य के द्वारा घटादि का प्रकाशक होता है॥८८॥

**एवंभूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्याप्यपेक्षितत्वात्तेऽपि प्रदर्श्यन्ते। श्रवणं नाम षड्विधलिंगैरशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्यावधारणम्। लिंगानि तु उपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि। तदुक्तम्-उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये" ॥८९॥**

(सं० टी०) इयता ग्रन्थजालेन प्रतिपादितस्य प्रत्यगभिन्नपरमानन्दाखंडचैतन्यस्य साक्षात्कारलक्षणमखंडाकारांतःकरणवृत्तिं प्रतिपिपादयिषुः तत्साधनभूतश्रवणादेरवश्यानुष्ठेयत्वं तेषां लक्षणानि च क्रमेण दर्शयति एवंभूतेत्यादिना अद्वैतं वस्तु भासत इत्यंतेन ग्रंथेन। एवंभूतेति। एवंभूतस्योक्तश्रुतियुक्तयनुभवैर्निरस्तसमस्तोपाधिप्रत्यगभिन्नपरमानंदचिद्रूपस्य साक्षात्कारपर्यंतं श्रवणादीन्यनुष्ठेयानीति प्रतिजानीते। तेऽपीति। श्रवणादयोऽपीत्यर्थः। तत्र श्रवणस्य लक्षणमाह। षड्विधेति। लीनमर्थं गमयतीति लिंगशब्दस्य व्युत्पत्तेः ब्रह्मात्मैकत्वनिश्चायकैरुपक्रमोपसंहारादिषड्विलिंगैः सर्वेषां वेदांतवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिश्चयश्रवणमित्यर्थः। तानि च लिंगानि क्रमेणोपदिशति। उपक्रमेति। तथा चोक्तम् "उपक्रमोसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये" इति ॥८९॥

(भा० टी०) इस प्रकार परमात्मा चैतन्य के साक्षात्कार होने तक श्रवण, मनन, निदिध्यासन, समाधि और अनुष्ठान यह आवश्यक होते हैं इस कारण अब श्रवणादि के लक्षण दिखलाते हैं। छः प्रकार के लिंगों के द्वारा अद्वितीय ब्रह्म में सम्पूर्ण वेदान्त

के तात्पर्य का अवधारण करना श्रवण कहाता है। छः प्रकार के लिंग ये हैं उपक्रमोपसंहार, अभ्यास, अपूर्वता, फल, अर्थवाद और उपपत्ति। ग्रन्थान्तर में भी लिखा है-"पूर्वोक्त छः प्रकार के लिंग तात्पर्यार्थ के निश्चायक होते हैं"॥८९॥

**तत्र प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यंतयोरुपादानमुपक्रमोपसंहारौ । यथा छान्दोग्ये षष्ठे प्रपाठके प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः "एकमेवाद्वितीयम्" इत्यादौ "ऐतदात्म्यमिदं सर्वम्" इत्यन्ते च प्रतिपादनम् प्रकरणप्रतिपाद्यस्य वस्तुनः तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः । यथा तत्रैवाद्वितीयवस्तुनो मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य वस्तुनः प्रमाणान्तरेणाविषयीकरणमपूर्वत्वम् यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम् फलं तु प्रकरणप्रतिपाद्यस्य आत्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्रश्रूयमाणं प्रयोजनम् । यथा तत्रैव "आचार्यवान् पुरुषो वेद" तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ संपत्स्ये" इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिप्रयोजनं श्रूयते। प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः । यथा तत्रैव उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्यद्वितीयवस्तुप्रशंसनम् । प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिः उपपत्तिः । यथा तत्रैव "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादावद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते ॥९०॥**

(सं० टी०) उपक्रमोपसंहारौ तावद्दर्शयति । तत्र प्रकरणप्रतिपाद्यस्येति । तदुदाहृत्य दर्शयति । तथेति । एकमेवाद्वितीयमित्युपक्रम्य ऐतदात्म्यमिदं सर्वमिति प्रतिपादनमुपक्रमोपसंहारावित्यर्थः । अभ्यासस्य लक्षणमाह । पौनः पुन्येनेति । अत्रापि श्रुतिमुदाहरति । यथेति । अपूर्वत्वस्य लक्षणमाह । प्रमाणांतरेति । "तं त्वौपनिषदं पृच्छामि" इत्यादिश्रुतिभिरुपनिषन्मात्रवेद्यत्वप्रतिपादनाद्ब्रह्मणोऽपूर्व-

त्वमित्यर्थः । अथवा स्वप्रकाशत्वेन स्वव्यवहारे स्वातिरिक्तप्रमाणानपेक्षत्वात् ब्रह्मणोऽपूर्वत्वमित्यर्थः । क्रमप्राप्तस्य फलस्य लक्षणमाह । फलं त्विति । अत्रानुरूपमुदाहरणमाह । आचार्यवानित्यादिश्रवणादिसाधनानां ब्रह्मात्मैकत्वविज्ञानं प्रयोजनं ब्रह्मज्ञानस्य तु तत्प्राप्तिः फलम् "ब्रह्म विद् ब्रह्मैव भवति । तरति शोकमात्मवित्" इत्यादिश्रुतेरित्यर्थः । पंचमलिंगस्याप्यर्थवादस्य लक्षणमाह । प्रशंसनमिति । प्रकरणप्रतिपाद्यद्वितीयब्रह्मस्वरूपपस्तावद्वाक्यमर्थवाद इत्यर्थ । अत्रापि श्रुतिमाहउत तमादेशमप्राक्ष्य इत्यादि "येनाश्रुतं श्रुतं भवति" येन सकलप्रपंचाधिष्ठानब्रह्मस्वरूपश्रवणेनाश्रुतं प्रपंचजातमपि भवति श्रुतं येन ब्रह्मज्ञानेनाज्ञातं सर्वं जगत् ज्ञातं भवति येन ब्रह्मसाक्षात्कारेणासाक्षात्कृतं साक्षात्कृतं भवति ब्रह्मणः सर्वतः संप्लुतोदकस्थानीयत्वादित्यर्थः । अवशिष्टाया उपपत्तेर्लक्षणमाह। प्रकरणेति । तामुदाहरेति । यथेति । मृद्विकारेषु घटादिषु विकारनामध्येययोर्वाचारंभणमात्रत्वेन यथा मृन्मयत्वमेवावशिष्यते नान्यत्तथा चिद्विवर्तस्य प्रपश्चस्य गिरिनदीसमुद्रात्मकविकारनामधेययोर्वाचारंभणमात्रत्वाच्चिन्मात्रमेवावशिष्यते रज्जुविवर्तस्य सर्पस्य रज्जुमात्रावशेषवदित्यर्थः ॥९०॥

**(भा० टी०) जिस प्रकरण में जो वस्तु प्रतिपादन करने के योग्य हो उस प्रकरण में आदि से लेकर अन्तपर्य्यंत उसी वस्तु का प्रतिपादन करना उपक्रमोपसंहार कहाता है। जैसा कि छान्दोग्य के षष्ठ अध्याय के आदि में (एकमेवाद्वितीयं ब्रह्म) "अद्वितीय ब्रह्म ही एक है" और अंत में भी "यह आत्मा ही जगन्मय है" इस प्रकार प्रकरण का प्रतिपाद्य वस्तु अद्वितीय ब्रह्म का ही प्रतिपादन किया है। इसी प्रकार जिस प्रकरण में जो वस्तु प्रतिपादन करने के योग्य है उसी वस्तु का वारम्वार प्रतिपादन करना अभ्यास कहाता है। छान्दोग्य के षष्ठाध्याय में ही जिस प्रकार "तत्त्वमसि" इस वाक्य द्वारा अद्वितीय ब्रह्म का नौ वार प्रतिपादन किया है। जिस प्रकरण में जो वस्तु प्रतिपादन करने योग्य हो उस वस्तु के प्रमाण से अतिरिक्त प्रमाण के विषय को छोड़कर उसी वस्तु के प्रतिपादन करने को अपूर्वता कहते हैं। उसी षष्ठाध्याय में ही केवल उपनिषदों के प्रमाण से ही जिस प्रकार अद्वितीय ब्रह्म का प्रतिपादन किया है उस विषय में अन्य प्रमाण का नाम भी नहीं लिया है। जिस प्रकरण में जो वस्तु प्रतिपादन करने योग्य हो उस प्रकरण में उसी वस्तु का अथवा उस वस्तु के अनुष्ठान का श्रवण करना फल कहाता है जैसा कि उसी षष्ठाध्याय में लिखा है "आचार्य्यवान् पुरुष ब्रह्म के जानने में समर्थ होता है वही ज्ञानी पुरुष विमुक्ति पर्यंत प्रतीक्षा करता है और विमुक्ति होने पर परब्रह्म में लीन हो जाता है" इस प्रकार अद्वितीय ब्रह्म ज्ञान का ब्रह्म प्राप्ति होने में प्रयोजन है। ऐसा श्रुति में कहा है जिस प्रकरण में जो वस्तु प्रतिपादन करने योग्य हो। उस वस्तु की प्रशंसा का**

नाम अर्थवाद है। जैसा कि उसी षष्ठ अध्याय में कहा है गुरु शिष्य को कहते हैं हे शिष्य! तूने हमसे जिसका प्रश्न किया है उसको सुनो नहीं सुने हुये पदार्थ का श्रवण करना, भूले हुये पदार्थ का स्मरण करना, नहीं जाने हुये पदार्थ का जानना। इस प्रकार उस अद्वितीय ब्रह्म वस्तु की प्रशंसा कही है। जिस प्रकरण में जो वस्तु प्रतिपादन करने योग्य हो उस प्रकरण में उसी वस्तु के प्रतिपादन की युक्ति का नाम उपपत्ति है। जैसा कि उसी षष्ठाध्याय में कहा है कि "हे सौम्य! जिस प्रकार एक मृत्तिका के पिण्ड का ज्ञान होने पर संपूर्ण मृत्तिका के पात्रादिकों का ज्ञान हो जाता है मृत्तिका की कम्बुग्रीवादि विकृति और नाम कहना मात्र है यथार्थ मृत्तिका ही है"। इसी प्रकार अद्वितीय वस्तु ब्रह्म के प्रतिपादन करने में विकार की कथन मात्र युक्ति देखने में आती है वास्तविक नहीं।।९०।।

मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनम् । विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहः निदिध्यासनम् । समाधिश्च द्विविधः । स विकल्पको निर्विकल्पकश्चेति । तत्र सविकल्पको नाम ज्ञातृज्ञानादिविकल्पलयाभपेक्षया द्वितीय वस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरवस्थानम्। तदा मृन्मयगजादिभानेऽपि मृद्भानवत् द्वैतभानेऽप्यद्वैतं वस्तु भासते । तदुक्तमभियुक्तैः "दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमव्ययम् । तदेव चाहं सततं विमुक्तम् । दृशिस्तु शुद्धोऽहमविक्रियात्को न मेऽस्ति बंधो न च मे विमोक्षः" इत्यादि ।।९१।।

(सं० टी०) श्रवणनिरूपणानंतरं तदुत्तरांगस्य मननस्य लक्षणमाह । मननं त्विति । षड्विधलिंगतात्पर्यपूर्वकं श्रुतस्याद्वितीयब्रह्मणो वेदांन्तविरोधिनीभिर्युक्तिभिर्नैरंतर्येणानुचिंतनं मननमित्यर्थः । निदिध्यासनस्य लक्षणमाह । विजातीयेति । विजातीयदेहादिबुद्धयन्तजडपदार्थविषयकप्रत्ययनिराकरणेन सजातीयाद्वितीयवस्तुविषयकप्रत्ययप्रवाहीकरणं निदिध्यासनमित्यर्थः । व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावे सति चित्तस्यैकाग्रतापरिणामः समाधिः । स च द्विविध इत्याह । सविकल्पको निर्विकल्पकश्चेति । तस्य लक्षणमाह । तत्रेति । तत्र तयोः सविकल्पनिर्विकल्पकयोर्मध्ये, सविकल्पकोऽपि द्विविधः । अहं ब्रह्मास्मीति शब्दान्न विरुद्धतयाऽद्वितीये वस्तुनि चित्तवृत्तेरवस्थानमित्येकः । द्वितीयस्तु ज्ञातृज्ञानज्ञेयत्रिपुटी-

विलयानपेक्षया अहंब्रह्मास्मीति दृश्यानुविद्धतयाऽद्वितीयवस्तुन्यविच्छेदेन चित्तवृत्तेरवस्थानमित्यर्थः। ननु "भक्षितेऽपि लशुने न शान्तो व्याधिः" इति न्यायेनोक्तसविकल्पकसमाध्योः सकलभेदनिराकरणाय प्रवर्तमानयोरपि ज्ञात्रादिभेदविषयत्वेन नाद्वैतवस्तुमात्रमानं तत्रेत्याशंक्येतरमाह ।तदेति ।तदा सविकल्पकसमाध्यनुभवकाले ज्ञात्रादिभेदप्रतीतावप्यद्वैतं वस्तु भासत एव सुवर्णमयकुंडलादिभाने सुवर्णभानवन्मृन्मयघटादिभाने मृद्भानवच्च घटादिभानस्य वाचारंभणमात्रत्वात् ज्ञात्रादिभानस्यापि वाचारंभणमात्रत्वादद्वैतमेव वस्तु भासत इत्यर्थः । यद्वा "सर्वं खल्विदं ब्रह्म ऐतदात्म्य मिदं सर्वम्" इत्यादिश्रुतिबलात्सर्वमहामिति गिरिनदीसमुद्रात्मकं सर्वं जगत् स्वाभिन्नसच्चिदानंदब्रह्मत्वेनानुभूय तस्य दग्धपटन्यायेन प्रपंचभानेऽप्यद्वैतं सच्चिदानंदलक्षणं वस्तु भासत एव इत्यर्थः । तदुक्तं भगवता "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" इति मूलकारोऽप्यस्मिन्नर्थे ग्रंथांतरसंमति दर्शयति-तदुक्तमिति । ओमिति यत्परं ब्रह्म तदेवाहमित्यन्वयः । किं तदित्याह । दृशिस्वरूपमिति । दृशिः दृष्टिः तस्या रूपं द्रष्टृत्वं तद्यस्य परमात्मस्वरूपस्य तद्दृशिस्वरूपं साक्षिस्वरूपमित्यर्थः । तदुक्तं भगवता "उपद्रष्टानुमंता च भर्ता भोक्ता महेश्वरः ।। परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः" इति । पुनः किंरूपं तत् गगनोपमं गगनम् उपमा दृष्टांतो यस्य तद्गगनोपमं गगनवन्निर्लेपस्वरूपमित्यर्थः । तथा च भगवद्वचनम् "यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते । सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते" इति । यद्वा गगनोपमं गगनवदमूर्तस्वरूपमित्यर्थः ।"आकाशं शरीरं ब्रह्म"इति श्रुतेः। पुनः किंभूतं सकृदेकदैव विभांत सर्वदैकस्वरूपेण भासमानं चन्द्रादिप्रकाशवन्न वृद्धिक्षयशीलमित्यर्थः । पुनः किंरूपम् अजं जन्मरहितम्, एकं निरस्तसर्वोपाधिभेदम्, अक्षरं विनाशधर्मराहित्येन कूटस्थस्वरूपामित्यर्थः । तथा च भगवानाह । "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इति । अलेपकम् असंगत्वादविद्यादिदोषरहितमित्यर्थः "असंगो ह्ययं पुरुष" इति श्रुतेः । सर्वगतं सर्वत्र ब्रह्मादिस्थावरातेषु गतं व्याप्तम् अद्वयं सजातीयविजातीयस्वगतभेदराहित्येन द्वितीयरहितं सततं विमुक्तमिति सर्वदा कार्यकारणात्मकसर्वोपाधिविनिर्मुक्तत्वेन सततमेकरूपमित्यर्थः । तथाच भागवते "बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः" इति । तथा च एतादृशं निरतिशयानंदं यत्परं ब्रह्म तदेवाह । अहमिति । भावयतो निषेधप्रतियोगित्वेन तत्तदुपाधिभानात्तत्तत्प्रयुक्तभेदभानेऽप्यद्वैतं भासत एवेत्यर्थः ।।९१।।

**(भा० टी०) अब मनन का लक्षण कहते हैं वेदान्त के अनुकूल युक्ति द्वारा चिरकाल से श्रवण किये हुए अद्वितीय ब्रह्म वस्तु की चिन्तना का नाम मनन है। तत्त्वज्ञान के विरोधी देहादि जड़ पदार्थ ज्ञान को त्याग कर अद्वितीय ब्रह्म वस्तु के अनुकूल ज्ञान के प्रवाह (आधिक्य) को निदिध्यासन कहते हैं। समाधि दो प्रकार की है। एक सविकल्पक, दूसरी निर्विकल्पक । ज्ञाता ज्ञान और जानने योग्य वस्तु**

इन तीन पदार्थों को पृथक् पृथक् ज्ञान होने पर भी अद्वितीय ब्रह्म वस्तु में अखंडाकार चित्त की वृत्ति होना सविकल्प समाधि कहाता है। जैसे मृत्तिका के हस्ती से हस्ती का ज्ञान होने पर भी मृत्तिका ही है ऐसा ज्ञान होता है उस प्रकार द्वैतज्ञान होने पर भी अद्वैत ज्ञान होता है। इस विषय में प्रमाण भी कहा है-"सर्वसाक्षी" सर्वव्यापी, सर्वोत्कृष्ट, स्वप्रकाशस्वरूप, जन्ममृत्युरहित, निर्लिप्त और सर्वदा मुक्तस्वभाव जो अद्वितीय ब्रह्म हैं सो मैं हूं॥९१॥

**निर्विकल्पकस्तु ज्ञातृज्ञानादिभेदलयापेक्षया द्वितीयवस्तुनि तदाकाराकारितताया बुद्धिवृत्तेरतितरामेकीभावेनावस्थानम् । तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवत् द्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमेवावभासते । ततश्चास्य सुषुप्तेश्चाभेदशङ्का न भवति । उभयत्र वृत्त्यभाने समानेऽपि तत्सद्भावासद्भावमात्रेणानयोर्भेदोपपत्तेः ॥९२॥**

(सं० टी०) समाधिस्वरूपमाह । निर्विकल्पकस्त्विति । अयं च द्विविधः । चिरकालाभ्यस्तपटुतरसविकल्पकसमाध्यनुभवजनितसंस्कारसहकृतायाः चित्तवृत्तेर्ज्ञात्रादित्रिपुटीलयपूर्वकमद्वैतवस्तुन्येकभावनात्मकः प्रथमः एतन्निर्विकल्पकसमाध्यभ्यासपाटवेन लुप्तसंस्कारतया ज्ञात्रादित्रिपुटीलयपूर्वकमखंडाकारितायाश्चित्तवृत्तेर्विनापि स्वस्फूर्तिं केवलचिदात्मना च स्थानात्मको द्वितीयः । तत्र द्वितीयपक्षमभिप्रेत्याह । ज्ञातृज्ञानादीति । नन्वेवं समाधिसुषुप्त्योर्विक्षेपाभावेन वृत्त्यभानादभेदमाशंक्य परिहरति । तत्र युक्तिमाह ।उभयत्रेति । समाधिसुषुप्त्योरित्यर्थः । तत्सद्भावेति । समाधावज्ञायमानवृत्तिसद्भावात् सुषुप्तौ वृत्त्यभावाच्च तयोर्भेदोपपत्तेरित्यर्थः ॥९२॥

**(भा० टी०) ज्ञाता, ज्ञान और जानने योग्य वस्तु तीन पदार्थों के भेद ज्ञान का अभाव होने पर अद्वितीय ब्रह्मवस्तु में अखण्डाकार चित्त की वृत्ति होना निर्विकल्पक समाधि कहाता है। इस समाधि के समय जिस प्रकार जल में मिले हुए लवण के लवणत्व ज्ञान के अभाव होने पर केवल जल का ज्ञान होता है उसी प्रकार अद्वितीय ब्रह्माकार चित्तवृत्ति के ज्ञान की सत्ता का अभाव होने पर भी ब्रह्म वस्तुमात्र ज्ञान रहता है अर्थात् अखण्ड ब्रह्म में चित्तवृत्ति के लीन होने पर और भिन्नरूप कुछ ज्ञान नहीं होता है अखण्ड ब्रह्ममय ज्ञान ही होता है इसी कारण सुषुप्ति अवस्था से निर्विकल्पक समाधि का भेद कोई भेद नहीं है इस प्रकार आशंका भी नहीं होती है**

क्योंकि सुषुप्ति अवस्था में और निर्बिकल्पक समाधि अवस्था में वृत्तिज्ञान की अभाव अंश में समानता होने पर भी वृत्ति की सत्ता और सत्ताद्वारा समाधि और सुषुप्ति का भेद है॥९२॥

**अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः । तत्राहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः । शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः । करचरणादिसंस्थानविशेषलक्षणानि पद्मस्वस्तिकादीनि आसनानि । रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः। इंद्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः । अद्वितीयवस्तुन्यन्तरिद्रिंयधारणं धारणा । तत्राद्वितीयवस्तुनि विच्छिद्यविच्छिद्य अन्तरिद्रियवृत्तिप्रवाहः ध्यानम् । समाधिस्तु उक्तः सविकल्पक एव ॥९३॥**

(सं० टी०) उक्तसमाधेः साधनापेक्षायामाह । अस्येति तानि च साधनानि क्रमेणोद्दिशति । यमेति । यमाद्यष्टांगानि समाधेरंगसाधनानीत्यर्थः । प्रथमं यमस्य लक्षणमाह । तत्रेति । तेषु यमाद्यष्टांगेषु मध्ये अहिंसादयः पंच यमाः अवश्याः अनुष्ठेया इत्यर्थः । तदनंतरं नियमानाह । शौचेति । शौचादयः पंच नियमा इत्यर्थः । आसनं लक्षयति । आसनानीति । करचरणादिसंस्थानविशेषलक्षणानि पद्मकस्वस्तिकादीनि आसनानि । प्राणायामलक्षणमाह । रेचकेति "इडया पूरयेद्वायुं मुंचेद्दक्षिणयानिलम् । यावच्छ्वासं समासीनः कुंभयेत्तं सुषुम्नया" यदा योगी पद्मासन उपविश्य योगमभ्यस्यति तदा गुल्फाभ्यां गुदमूलं निष्पीडय खेचरीमुद्रासहायेन प्राणधारणया सुषुम्नामार्गेण मूलाधारात्कुंडलिनीमुत्थाप्य स्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञानिर्वाणाख्यषट्चक्रभेदक्रमेण सहस्रदलकमलकर्णिकायां विद्यमानपरमात्मना सह प्राणं संयोज्य तत्रैव चित्तं निर्वातदीपवन्निश्चलं कृत्वा स्वात्मानंदरसं पिबतीत्येतत्प्राणायामफलम् । स च द्विविधः-अगर्भः सगर्भश्चेति "मुंचेद्दक्षिणयावायुं मांत्राहीनमनन्यधीः ।पूरयेद्वामया तद्वत्कुंभयेच्च सुषुम्नया ।।यावच्छ्वासं जितश्वासो भवेन्मासाज्जितेन्द्रियः" इति वचनात् प्रणवोच्चारणराहित्येनोक्तरेचकपूरककुंभकक्रमेण प्राणनिरोधोऽगर्भप्राणायामः । "रेचयेत् षोडशेनैव तद्वैगुण्येन पूरयेत् । कुंभयेच्च चतुःषष्टया प्रणवार्थमनुस्मरन्" इति वचनात् षोडशप्रणवं मनसा जपन्दक्षिणया वायुं विरेच्य द्वात्रिंशत्संख्याकप्रणवं मनसा समुच्चरन् वामया वायुमापूर्य चतुःषष्टिसंख्याकं प्रवणं मनसा जपंस्तदर्थं च अकारोकारमकारार्द्धमात्रा-

त्मकं सार्धत्रिमात्रात्मकसार्धत्रिवलयाकारकुडलिनीरूपं चिदानंदकंदं च मूलाधारादिब्रह्मरंध्रांतमनुसंदधत्सुषुम्नया चित्तमपि तदेकप्रवणंकुर्वन् यावच्छ्वासं कुंभयेत्। तदुक्तमाचार्यैः-"षोडशतद्द्विगुणचतुःषष्टिमात्राणि च क्रमशः ॥ रेचकपूरककुंभकभेदैस्त्रिविधः प्रभंजनायामः" इति प्राणायामप्रकारः। क्रमप्राप्तं प्रत्याहारं निरूपयति। इंद्रियाणामिति। श्रोत्रादीनामिंद्रियाणां स्वस्वविषयेभ्यः शब्दादिभ्यः सकाशात्पाषाणोपरि प्रयुक्तः शरसंघातः तद्वत्प्रत्यावर्तनं प्रत्याहारः। नन्विंद्रियाणां स्वस्वविषयेभ्यो निवर्तनं प्रत्याहार इत्युक्तं तन्न संभवति शब्दादिविषयाणां सुखसाधनत्वेन वैषयिकसुखव्यतिरिक्तनिरतिशयानंदसद्भावे प्रमाणाभावाद्धैरण्यगर्भाद्यमृतभोगस्यश्वरेणापि त्युक्तमशक्यत्वादिति चेत्। न। मूढैः कर्मजडैर्विषयलंपटैः त्यक्तुमशक्यत्वेऽपि शुद्धांतःकरणेन संसाराविद्यकत्वदर्शिना विषयदोषदर्शनेन तुच्छीकृतशब्दादिविषयप्रपंचेन पुरुषोत्तमेन पुरीषवत् त्यक्तुं शक्यत्वात्। अन्यथा संन्यास एव लुप्येत "तस्मात् न्यासमेषां तपसामतिरिक्तमाहुः। एतदेव लोकमभीप्संतः प्रव्राजिनः प्रव्रजंति। एतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमनिच्छेत"। "न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः"। ब्रह्मचर्यादेव प्रव्रजेत यदहरेव विरजेत्तदहरेव प्रव्रजेत् वनाद्गृहाद्वा।"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति। संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया "प्रव्रजंत्यकृतोद्वाहाःपरवैराग्यमाश्रिताः। प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः। ब्रह्मावाप्त्यवै तत्त्यागमभीप्संतीति श्रुतेर्बलात्" इत्यादिश्रुतिस्मृतिभिः तथा "आनंदो ब्रह्मेति व्यजानात् एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति एषोऽस्य परमानंदः आत्मैवानंदः यदेष आकाश आनंदो न स्यात् आनंदाद्ध्येव खलु" इत्यादिश्रुतिभिश्च नित्यात्मसुखस्य प्रतिपादितत्वाच्छब्दादिवैषयिकसुखव्यरिरिक्तनित्यनिरतिशयानंदसद्भावे प्रमाणाभावा दित्येतदपि निरस्तं बोद्धव्यम् ॥ संप्रति धारणां लक्षयति अद्वितीयवस्तुनीति। सर्वेषां बुद्धिसाक्षितया विद्यमाने वस्तुनि चित्तनिक्षेपणं धारणा इत्यर्थः। धारणपाटवाभावेन चित्तस्थैर्याभावादद्वितीयवस्तुनि विच्छिद्यविच्छिद्य चित्तवृत्तिप्रवाहकरणं ध्यानमित्याह। तत्रेति। समाधिरुक्त एवं सविकल्पकः स्मर्तव्य इत्याह। समाधिरिति ॥९३॥

**(भा० टी०) यम, नियम, आसन, प्रणायाम, प्रत्याहार, धारणा, ध्यान और समाधि ये सम्पूर्ण निर्विकल्पक समाधि के अंग हैं। अहिंसा, सत्य, चोरी का त्याग ब्रह्मचर्य और अपरिग्रह इन सबके धारण का नाम यम है। पवित्रता, सन्तोष, तपस्या, अध्ययन और ईश्वर प्रणिधान इनको नियम कहते हैं। हस्तपादादि के संस्थान विशेष जो स्वस्तिक पद्म इत्यादि हैं सो आसन कहाते है। रेचक, पूरक, कुंभकरूप प्राण वायु के विग्रह करने के उपाय का नाम प्राणायाम है। शब्दादि**

विषयों से श्रवणादि इन्द्रियों का हटाना प्रत्याहार कहाता है। अद्वितीय ब्रह्म वस्तु में अन्तःकरण के अभिनिवेश का नाम धारणा है। अद्वितीय ब्रह्मवस्तु में चित्तवृत्ति के प्रवाह का नाम ध्यान है। पूर्वोक्त सविकल्पक समाधि का नाम समाधि है॥९३॥

**एवमस्यांगिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति । लयस्तावत् अखण्डवस्त्वनवलम्बनेन चित्तवृत्तिर्निद्रा । अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरत्यवलम्बनं विक्षेपः । लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः । अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पानन्दास्वादनं रसास्वादः । समाध्यारम्भसमये सविकल्पानन्दास्वादनं वा ॥९४॥**

(सं० टी०) उक्तयमाद्यष्टांगसहितनिर्विकल्पकसमाधेर्निर्विघ्नानुष्ठानसिद्धयर्थं विघ्नज्ञानव्यतिरेकेण तन्निवारणस्य कर्तुमशक्यत्वादस्य चतुरो विघ्नान् दर्शयति । एवमस्येति । तत्राद्यविघ्नं लक्षयति । लयस्तावदिति । लयो द्विविधं चिरकालप्रयुक्ताष्टांगसहितनिर्विकल्पकसमाध्यभ्यासपाटवेनातितप्तलोहतलक्षिप्तचलबिन्दुवत्तैलरहितदीपकलिकावच्च प्रण्यगभिन्ने परमानंदे चित्तवृत्तेर्लयः प्रथमः । द्वितियस्तु मूर्छावस्थावत् आलस्येन चित्तवृत्तेर्बाह्यशब्दादिविषयग्रहणानादरे सति प्रत्यगात्मस्वरूपानवभासनाद्वृत्तेः स्तब्धीभावलक्षणनिद्रारूपः । तत्राद्यमंगीकृत्य द्वितीयस्य विघ्नत्वेन तत्त्यागाय तत्स्वरूपमाह । लयस्तावदिति । द्वितीयं विघ्नमाह । अखंडेति । अखंडवस्तुग्रहणयांतर्मुखतया प्रवृत्तायाः चित्तवृत्तेः चिदनवलंबनेन त्रस्तपक्षिवत्पुनर्बाह्यविषयग्रहणाय प्रवृत्तिर्विक्षेप इत्यर्थः । तृतीयं विघ्नमाह लयेतिं । रागादयः त्रिविधाः बाह्या आभ्यंतरा वासनामात्ररूपाश्चेति।बाह्याः पुत्रादिविषयाः आभ्यंतरा मनोराज्यादयः । संस्काररूपा वासनामयाः । तत्रानेकजन्माभ्यस्तबाह्यभ्यंतररागाद्यनुभवजनितसंस्कारैः कलुषीकृतं चित्तं कथंचिच्छ्रवणादिसाधनेनांर्तमुखमपि चैतन्यग्रहणसामर्थ्याभावान्मध्ये एवं स्तब्धीभवति यथाराजादर्शनाय स्वगृहान्निर्गत्य राजमन्दिरप्रविष्टस्य कस्यचित्पुरुषस्य द्वारपालनिरोधेन स्तब्धी भावः । तथा परित्यक्ताबाह्यविषयस्याखंडवस्तुग्रहणाय प्रवृत्तस्य चितस्योद्बद्धरागादिसंस्कारैः स्तब्धीभावादखंडवस्त्वग्रहणं कषाय इत्यर्थः । चतुर्थविघ्नमाह । अखंडेति । उक्तसविकल्पकसमाध्योर्मध्ये द्वितीयः शब्दानुविद्धः त्रिपुटीविशिष्टः तस्मिन्नानंदकर बाह्यशब्दादिविषयप्रपंचभारत्यागप्रयुक्तो न तु चैतन्यप्रयुक्तः यथा निधिग्रहणं माय प्रवृत्तस्य निधिपरिपालकभूतप्रेताद्यावृतस्य निधिप्राप्त्यभावेऽपि भूताद्यनिष्ट

त्मकं सार्धत्रिमात्रात्मकसार्धत्रिवलयाकारकुंडलिनीरूपं चिदानंदकंदं च मूलाधारादिब्रह्मरंध्रांतमनुसंदधत्सुषुम्नया चित्तमपि तदेकप्रवणंकुर्वन् यावच्छ्वासं कुंभयेत्। तदुक्तमाचार्यैः-"षोडशतद्द्विगुणचतुःषष्टिमात्राणि च क्रमशः ॥ रेचकपूरककुंभकभेदैस्त्रिविधः प्रभंजनायामः" इति प्राणायामप्रकारः। क्रमप्राप्तं प्रत्याहारं निरूपयति । इंद्रियाणामिति । श्रोत्रादीनामिंद्रियाणां स्वस्वविषयेभ्यः शब्दादिभ्यः सकाशात्पाषाणोपरि प्रयुक्तः शरसंघातः तद्वत्प्रत्यावर्तनं प्रत्याहारः। नन्विंद्रियाणां स्वस्वविषयेभ्यो निवर्तनं प्रत्याहार इत्युक्तं तन्न संभवति शब्दादिविषयाणां सुखसाधनत्वेन वैषयिकसुखव्यतिरिक्तनिरतिशयानंदसद्भावे प्रमाणाभावाद्धैरण्यगर्भाद्यमृतभोगस्यश्वरेणापि त्युक्तमशक्यत्वादिति चेत् । न । मूढैः कर्मजडैर्विषयलंपटैः त्यक्तुमशक्यत्वेऽपि शुद्धांतःकरणेन संसाराविद्यकत्वदर्शिना विषयदोषदर्शनेन तुच्छीकृतशब्दादिविषयप्रपंचेन पुरुषोत्तमेन पुरीषवत् त्यक्तुं शक्यत्वात् । अन्यथा संन्यास एव लुप्येत "तस्मात् न्यासमेषां तपसामतिरिक्तमाहुः । एतदेव लोकमभीप्संतः प्रव्राजिनः प्रव्रजंति । एतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमनिच्छेत" । "न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः" । ब्रह्मचर्यादेव प्रव्रजेत यदहरेव विरजेत्तदहरेव प्रव्रजेत् वनाद्गृहाद्वा ।"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति। संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया "प्रव्रजंत्यकृतोद्वाहाःपरवैराग्यमाश्रिताः । प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः । ब्रह्मावाप्त्यवै तत्यागमभीप्संतीति श्रुतेर्बलात्" इत्यादिश्रुतिस्मृतिभिः तथा "आनंदो ब्रह्मेति व्यजानात् एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति एषोऽस्य परमानंदः आत्मैवानंदः यदेष आकाश आनंदो न स्यात् आनंदाद्ध्येव खलु" इत्यादिश्रुतिभिश्च नित्यात्मसुखस्य प्रतिपादितत्वाच्छब्दादिवैषयिकसुखव्यरिरिक्तनित्यनिरतिशयानंदसद्भावे प्रमाणाभावा दित्येत्तदपि निरस्तं बोद्धव्यम् ॥ संप्रति धारणां लक्षयति अद्वितीयवस्तुनीति। सर्वेषां बुद्धिसाक्षितया विद्यमाने वस्तुनि चित्तनिक्षेपणं धारणा इत्यर्थः । धारणपाटवाभावेन चित्तस्थैर्याभावादद्वितीयवस्तुनि विच्छिद्यविच्छिद्य चित्तवृत्तिप्रवाहकरणं ध्यानमित्याह । तत्रेति । समाधिरुक्त एवं सविकल्पकः स्मर्तव्य इत्याह । समाधिरिति ॥९३॥

**(भा० टी०) यम, नियम, आसन, प्रणायाम, प्रत्याहार, धारणा, ध्यान और समाधि ये सम्पूर्ण निर्विकल्पक समाधि के अंग हैं। अहिंसा, सत्य, चोरी का त्याग ब्रह्मचर्य और अपरिग्रह इन सबके धारण का नाम यम है। पवित्रता, सन्तोष, तपस्या, अध्ययन और ईश्वर प्रणिधान इनको नियम कहते हैं। हस्तपादादि के संस्थान विशेष जो स्वस्तिक पद्म इत्यादि हैं सो आसन कहाते है। रेचक, पूरक, कुंभकरूप प्राण वायु के विग्रह करने के उपाय का नाम प्राणायाम है। शब्दादि**

विषयों से श्रवणादि इन्द्रियों का हटाना प्रत्याहार कहाता है। अद्वितीय ब्रह्म वस्तु में अन्तःकरण के अभिनिवेश का नाम धारणा है। अद्वितीय ब्रह्मवस्तु में चित्तवृत्ति के प्रवाह का नाम ध्यान है। पूर्वोक्त सविकल्पक समाधि का नाम समाधि है॥९३॥

**एवमस्यांगिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति । लयस्तावत् अखण्डवस्त्वनवलम्बनेन चित्तवृत्तिर्निद्रा । अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरत्यवलम्बनं विक्षेपः । लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावात् अखण्डवस्त्वनवलम्बनं कषायः । अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पानन्दास्वादनं रसास्वादः । समाध्यारम्भसमये सविकल्पानन्दास्वादनं वा ॥९४॥**

(सं० टी०) उक्तयमाद्यष्टांगसहितनिर्विकल्पकसमाधेर्निर्विघ्नानुष्ठानसिद्ध्यर्थं विघ्नज्ञानव्यतिरेकेण तन्निवारणस्य कर्तुमशक्यत्वादस्य चतुरो विघ्नान् दर्शयति । एवमस्येति । तत्राद्यविघ्नं लक्षयति । लयस्तावदिति । लयो द्विविधं चिरकालप्रयुक्ताष्टांगसहितनिर्विकल्पकसमाध्यभ्यासपाटवेनातितप्तलोहतलक्षिप्तचलबिन्दुवत्तैलरहितदीपकलिकावच्च प्रण्यगभिन्ने परमानंदे चित्तवृत्तेर्लयः प्रथमः । द्वितियस्तु मूर्छावस्थावत् आलस्येन चित्तवृत्तेर्बाह्यशब्दादिविषयग्रहणानादरे सति प्रत्यगात्मस्वरूपानवभासनाद्वृत्तेः स्तब्धीभावलक्षणनिद्रारूपः । तत्राद्यमंगीकृत्य द्वितीयस्य विघ्नत्वेन तत्त्यागाय तत्स्वरूपमाह । लयस्तावदिति । द्वितीयं विघ्नमाह । अखंडेति। अखंडवस्तुग्रहणयांतर्मुखतया प्रवृत्तायाः चित्तवृत्तेः चिदन्नवलंबनेन त्रस्तपक्षिवत्पुनर्बाह्यविषयग्रहणाय प्रवृत्तिर्विक्षेप इत्यर्थः । तृतीयं विघ्नमाह लयेति । रागादयः त्रिविधाः बाह्या आभ्यंतरा वासनामात्ररूपाश्चेति।बाह्याः पुत्रादिविषयाः आभ्यंतरा मनोराज्यादयः । संस्काररूपां वासनामयाः । तत्रानेकजन्माभ्यस्तबाह्याभ्यंतररागाद्यनुभवजनितसंस्कारैः कलुषीकृतं चित्तं कथंचिच्छ्रवणादिसाधनेनांतर्मुखमपि चैतन्यग्रहणसामर्थ्याभावान्मध्ये एव स्तब्धीभवति यथाराजादर्शनाय स्वगृहान्निर्गत्य राजमन्दिरप्रविष्टस्य कस्यचित्पुरुषस्य द्वारपालनिरोधेन स्तब्धी भावः । तथा परित्यक्ताबाह्यविषयस्याखंडवस्तुग्रहणाय प्रवृत्तस्य चित्तस्योद्बद्धरागादिसंस्कारैः स्तब्धीभावादखंडवस्त्वग्रहणं कषाय इत्यर्थः । चतुर्थविघ्नमाह । अखंडेति । उक्तसविकल्पकसमाध्योर्मध्ये द्वितीयः शब्दानुविद्धः त्रिपुटीविशिष्टः तस्मिन्नानंदो बाह्यशब्दादिविषयप्रपंचभारत्यागप्रयुक्तो न तु चैतन्यप्रयुक्तः यथा निधिग्रहणाय प्रवृत्तस्य निधिपरिपालकभूतप्रेताद्यावृतस्य निधिप्राप्त्यभावेऽपि भूताद्यनिष्टनिवृत्ति-

मात्रेण कोऽपि महानानदो भवति तथा सविकल्पकसमाधावखंडवस्त्वनवलंबन-नित्यानंदरसास्वादनाभावेऽपि अनिष्टबाह्यप्रपंचनिवृत्तिजन्यानंदं सविकल्परूपं ब्रह्मानंदभ्रमणास्वादयतीति तत् रसास्वादनमित्यर्थः। लक्षणांतरमाह। समाधीति। निर्विकल्पकसमाध्यारंभकालेऽनुभूयमानसविकल्पकानंदत्यागासहिष्णुतया पुनः तस्यैवास्वादनं रसास्वाद इत्यर्थः ।।९४।।

**(भा० टी०) पूर्वोक्त यमादि अङ्गयुक्तनिर्विकल्पकसमाधि के चार विघ्न होते हैं। जैसे लय, विक्षेप, कषाय और रसास्वादन। अखण्ड ब्रह्मवस्तु के अवलम्बन करने में असमर्थ चित्तवृत्ति की जो निद्रा है। उसका नाम लय है। अखण्ड ब्रह्मवस्तु के अवलम्बन करने में असमर्थ अन्तःकरणवृत्ति का जो अन्य वस्तु का अवलम्बन है उसको विक्षेप कहते हैं, लय और विक्षेप के न होने पर रागादि वासना से अन्तःकरण स्तब्ध हो जाता है तब अखण्ड ब्रह्मवस्तु के अवलम्बन की असामर्थ्य नाम कषाय है। निर्विकल्पक अखण्ड ब्रह्मवस्तु के अवलम्बन करने में असमर्थ अन्तःकरण की वृत्ति के सविकल्पक आनन्द आस्वादन का नाम रसास्वादन है अथवा निर्विकल्पक समाधि के आरम्भ के समय सविकल्प के रसास्वादन को भी रसास्वादन कहते हैं।।९४।।**

**अनेन विघ्नचतुष्टयेन रहितं चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवशिष्यते यदा तदा निर्विकल्पकः समाधिरित्युच्यतेतदुक्तम्-"लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः । सकषायं विजानीयाच्छमप्राप्तं न चालयेत् । नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेत्" । इत्याहि "यथा दीपो निवातस्थोनेंगते सोपमा स्मृता" इत्यादि च ।।९५।।**

(सं० टी०) प्रोक्तविघ्नचतुष्टनिवृत्तेः फलमाह । अनेनेति । लयादिविघ्नाभाव-सहितं चित्तं यदा निर्वातदीपवदचलमखंडचैतन्यमात्रमवतिष्ठते तदा निर्विकल्पक-समाधिरित्यर्थः लयादिविघ्नसद्भावे तन्निवृत्तिप्रकारे च वृद्धसंमतिमाह। तदुक्तमिति। पूर्वोक्तनिद्रालक्षणे लये जाते सति तन्निवृत्त्यर्थं चित्तं संबोधयेत् चित्तगतजाड्या-दिपरित्यागेन चित्तमुद्बोधयेत् उक्तविक्षेपयुक्तं चित्तं यदा भवति तदा विषयवैराग्या-दिना चित्तं शमयेत् बहिर्मुखतां परित्यज्यांतर्मुखं कुर्यात् उक्तरागादिकषायसहितं चित्तं यदा भवेत्तदा विजानीयादियं रागादिवासना बाह्यविषयप्रापिका नत्वखंडवस्तुप्रा-पिका अतो नेयं समीचीनेति विविच्य प्रत्यक्छ्रवणवासनायाः सकाशादियं निकृष्टा-ऽतस्त्याज्येयमिति जानीयादित्यर्थः । यद्वा सम्यग्वस्तुन्यप्राप्तं चित्तं यदा भवति तदा

तच्चित्तं कषायसहितं जानीयात्तच्च चित्तं यावता कालेन रागादिवासनाक्षयसहितं भवति तावत्कालं तच्चित्तं स्वस्थानान्न चालयेद्वासनाक्षयानंतरं चित्तं स्वत एव प्रत्यक्प्रवणं भवतीत्यर्थः । नास्वादयेति । पूर्वोक्तसविकल्पकरसं विषयप्रपंचभार-त्यागजन्यं नास्वादयेन्नानुभवेत् । तत्र युक्तिमाह । निःसंग इति । यतो निःसंगो वैषयिकसुखदुःखादिसंगरहितः अतः प्रज्ञया युक्तो भवेत् स्थिरप्रज्ञो भवेदित्यर्थः । तदुक्तं भगवता "प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थिनप्रज्ञस्तदोच्यते" इति । तस्माल्लयादिविघ्नाभावविशिष्टचित्तस्य चिन्मा-त्रतयावस्थानं निर्विकल्पकसमाधिरित्यर्थः । तत्र भगवानाह । यथेति । अथ निर्विकल्पकसमाधौ स्वगुरूपदिष्टमार्गेण यथामति किंचिद्विचार्यते । पंचभूमिकोपे-तस्य चित्तस्य .भूमिकात्रयपरित्यागेनावशिष्टं भूमिकाद्वयं समाधिरित्युच्यते । कास्ताः पञ्चभूमिकाः । क्षिप्तं मूढं विक्षिप्तमकाग्रं निरुद्धं चेति पंच चितभूमिकाः । तत्र सुरसंपल्लोकशास्त्रदेहवासनासु वर्तमानं क्षिप्तमित्युच्यते, निद्रातंद्रादिग्रस्तं चित्तं मूढमित्युच्यते, कदाचित्कृतध्यानयुक्तमपि बहिर्गमनशीलम् उक्तक्षिप्ताद्वि-शिष्टतया विक्षिप्तं चित्तमित्युच्यते, तत्र क्षिप्तमूढयोः समाधित्वशंकैव नास्ति विक्षिप्ते तु चेतसि विक्षेपांतर्गततया दहनांतर्गतबीजवच्चित्तस्य सद्य एव विनाशा-त्तदापि न समाधिः । एकाग्रतां पतञ्जलिः सूत्रयति "शांतोदितौ तुल्यप्रत्यौ चित्तस्यैकाग्रता परिणामः" इति । अस्यार्थः-शांतोऽतीतः उदितो वर्तमानः चित्तवृत्ति-रतीतवर्तमानाप्रत्ययौ भवतः । अतीतप्रत्ययो यं पदार्थं गृह्णाति उदितोऽपि तमेव चेत् गृह्णीयात् तदा तावुभौ तुल्यौ भवतः तादृश एव चित्तस्य परिणाम एकाग्रतेत्युच्यत्ते, एकाग्रताभिवृद्धिलक्षणं समाधिं सूत्रयति । सर्वार्थैकाप्रतयोः क्षयोदयौ चित्तस्य परिणामः समाधिरिति रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वानर्थान् पदार्थान्परि-गृह्णाति तस्य रजोगुणस्य निरोधाय क्रियमाणेन प्रयत्न विशेषेण दिने दिने योगिनः सर्वार्थया क्षीयते एकाग्रता चोदेति तादृशः चित्तस्य परिणामः समाधिरित्यर्थः । अस्य समाधेरष्टांगेषु यमनियमासनप्राणायामप्रत्याहाराः पंच बहिरङ्गानि । हिंसादिभ्यो निषिद्धेभ्यो योगिनः कर्मभ्यो यमयंति निवर्तयंतीत्यहिंसादयो यमाः । जन्महेतोः काम्यधर्मान्निवर्त्य मोक्षे हेतौ निष्कामधर्मे नियमयंति प्रेरयंतीति शौचादयो नियमाः। यमनियमयोरनुष्ठानवैक्षलण्यं स्मर्यते "यमान् सेवेत सततं न नित्यं नियमान् बुधः। यमान्पतत्यकुर्वाणो नियमान् केवलान् भजन्" इति बुद्धया यमनियमौ समीक्ष्ययमबहुलेषु प्रयत्नेषु बुद्धिमनुसंदधीत । आसनप्राणायामप्रत्याहारा व्याख्याताः ॥९५॥

**(भा० टी०) जिस समय चित्त पूर्वोक्त चार प्रकार के विघ्नों से रहित होकर वायु रहित स्थान में स्थित दीपक की तरह अचल हुआ केवल अखण्ड चैतन्य मात्र**

की चिन्ता में तत्पर होता है उस समय चित्त का निर्विकल्पक समाधि कहाता है श्रुति के प्रमाण से भी जाना जाता है-"लयरूप विघ्न उपस्थित होने पर अन्तःकरण में उद्बोधक को उत्पन्न करे अन्तःकरण के विक्षेपरूप विघ्न के तिरस्कृत होने पर उसको शान्त करे। कषायरूप विघ्न युक्त हुए चित्त को जानकर निवृत्त रक्खै। जिस समय अखण्ड ब्रह्म वस्तु में प्रणिधान होय उस समय अन्तःकरण को चलायमान न करे। उस समय कोई सविकल्पक आनन्द आस्वादन न करे और प्रज्ञा द्वारा निःसंग हो जाता है।" इस विषय में स्मृति का प्रमाण भी हैं-"जिस प्रकार दीपक वायु रहित स्थान में स्थित होकर निश्चल रहता है उसी प्रकार प्रणिधान होने पर अन्तःकरण निश्चल होता है"॥९५॥

**अथ जीवन्मुक्तलक्षणमुच्यते । जीवन्मुक्तो नाम स्वस्वरूपाखण्डे ब्रह्मणि साक्षात्कृते सति अज्ञाततत्कार्य्यसञ्चितकर्मसंशयविपर्य्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे" । इत्यादिश्रुतेः ॥९६॥**

(सं० टी०) ध्यानधारणासमाधित्रयं मनोविषयत्वात्सम्प्रज्ञातसमाधेरंतरंगं यमादिकं तु बहिरंगं तथाच केनापि पुण्येनांतरंगे प्रथमं लब्धे मति बहिरङ्गलाभाय नातिप्रयासः कर्तव्यः । यद्यपि पतंजलिना भौतिकभूततन्मात्रेन्द्रियाहंकारविषयाः संप्रज्ञातसमाधयो बहुधा प्रपंचिताः तथापि तेषामंतर्धानाकाशगमनादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वान्नास्माभिः तत्रादरः क्रियते तथा चोक्तं वासिष्ठे । "श्रीराम उवाच । जीवन्मुक्तशरीराणां कथमात्मविदांवर । शक्तयो नेह दृश्यंते आकाशगमनादिकाः ॥ श्रीवसिष्ठ उवाच । अनात्मविदमुक्तोऽपि सिद्धिजालानि वांछति । द्रव्यमंत्रक्रियाकालयुक्तयाप्नोत्येव राघव ॥ नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्मनात्मदृक् । आत्मनात्मनि संतुष्टो नाविद्यामनुधावति । ये केचन जगद्भावास्तानिविद्यामयान्विदुः । कथं तेषु किलात्मज्ञस्त्यक्त्वा विद्यां निमज्जति ॥ द्रव्यमंत्रक्रियाकालयुक्तयः साधुसिद्धिदाः । परमात्मपदप्राप्तौ नोपकुर्वंति काश्चन ॥" इति । आत्मविषयस्तु संप्रज्ञातसमाधिर्वासनाक्षयस्य निरोधसमाधेश्च हेतुः तस्मात्तत्रादरः कृतः । अथ पंचमभूमिकारुढचित्तस्य निरोधलक्षणः समाधिर्निरूप्यते । तं च समाधिं सूत्रयति "व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावो निरोधलक्षणाचित्तान्वयो निरोधः परिणामः" इति । व्युत्थानसंस्काराः समाधिविरोधिनः ते च निरोधहेतुना योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं वाऽभिभूयंते तद्विरोधिनश्च निरोध-

संस्काराः प्रादुर्भवंति तथा सति निरोध एवैकस्मिन् क्षणे चित्तमनुगच्छति सोऽयमीदृशः चित्तस्य परिणामो भवति यदा तदाऽसंप्रज्ञातसमाधिरुच्यते इत्यर्थः । तत्समाधिद्वयं जीवन्मुक्तस्यैव भवति नान्यस्येति मनसि निधाय प्रथमं जीवन्मुक्तस्य स्वरूपं प्रतिपादयितु प्रतिजानीते । अथेति । तस्य लक्षणमाह । जीवन्मुक्तो नामेत्यादिना ब्रह्मनिष्ठ इत्यंतेन । जीवन्मुक्तो नामेति । अत्राखिलबंधरहितो ब्रह्मनिष्ठो जीवन्मुक्त इति । तस्य लक्षणं जीवतः पुरुषस्य हि कर्तृत्वभोक्तृत्वसुखदुःखलक्षणोऽखिलो यः चित्तधर्मः सक्लेशरूपत्वाद्बन्धो भवति तेन रहितः परित्यक्तबंधनः ब्रह्मणि निष्ठा तदेकपरता यस्य स ब्रह्मनिष्ठः जीवन्मुक्त इत्यर्थः । सकलबंधराहित्ये हेतुमाह । स्वस्वरूपेति । गुरुश्रुतिस्वानुभवैर्ब्रह्मात्मैकत्वविज्ञानेन मूलाज्ञानतत्कार्यसंचितकर्मादीनामपि बाधितत्वात्सर्वसंशयाः क्षीयंते इति । तथा च श्रुतिः "भिद्यंते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः । क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति ।।९६।।

**(भा० टी०) अब जीवन्मुक्त का लक्षण निरूपण करते हैं। जो पुरुष अखण्ड चैतन्यस्वरूप ब्रह्मज्ञान होने के अनन्तर अज्ञान का नाश होने से सर्वव्यापी चैतन्यस्वरूप ब्रह्म का साक्षात्कार करके अज्ञान और अज्ञान के कार्य इकट्ठे किये हुये पाप, पुण्य, संशय और भ्रमादिक को दूर करके संसारबन्धन से विमुक्त होकर ब्रह्मनिष्ठ होता है उसको जीवन्मुक्त कहते हैं। इसका प्रमाण श्रुति से भी जाना जाता है-"सर्वश्रेष्ठ परब्रह्म का साक्षात्कार होने से हृदय का भ्रम नष्ट होता है। सम्पूर्ण संशय दूर हो जाते हैं और अच्छे बुरे कर्मों के फल नष्ट हो जाते हैं।।९६।।**

**अयन्तुव्युत्थानसमये मांसशोणितमूत्रपुरीषादिभाजनेन शरीरेण आन्ध्यमान्द्यापटुत्वादिभाजनेनेन्द्रियग्रामेण अशनायासपिपासाशोकमोहादिभाजनेनान्तःकरणेन च तत्तत्पूर्वपूर्ववासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानाविरुद्धान्यारब्धफलानि च पश्यन्नपि बाधितत्वात् परमार्थतो न पश्यति यथा इदमिन्द्रियजालमिति ज्ञानवान् तदिन्द्रियजालं पश्यन्नपि परमार्थमिदमिति न पश्यति । "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव समना अमना इव सप्राणोऽप्राण इव" इत्यादिश्रुतेः । उक्तञ्च-" सुषुप्तवज्जाग्रति यो न पश्यति द्वयञ्च पश्यन्नपि चाद्वयत्वतः ।। तथापि कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः" इति ।।९७।।**

(सं० टी०) नन्वेतादृशस्य जीवन्मुक्तस्य देहेन्द्रियादिभानमस्ति न वेत्याशंक्य दग्धपटन्यायेनेन्द्रजालनिर्मितसौधसमुद्रादिवच्च बाधितानुवृत्त्या मिथ्यात्वेन भानेऽपि परमार्थतया भानं नेत्याह । अयमित्यादिना न पश्यतीत्यंतेन । अस्मिन्नर्थे श्रुतिमाह सचक्षुरिति । उक्तेऽर्थे आचार्यवचनं प्रमाणयति । उक्तं चेति । इह जगति स एवात्मविन्नान्य इति मे निश्चय इत्यन्वयः । स क इत्यपेक्षायामाह । य इति । यः कोपि महापुरुषो ब्रह्मात्मैकत्वसाक्षात्कारेण निरस्तसमस्तभेदबुद्धिः सुषुप्त्यवस्थायां यथाद्वैतं न पश्यति तथा ब्रह्मदृष्टिदार्ढ्येन जाग्रदवस्थायामपि द्वैतं न पश्यति तद्दृष्ट्या ब्रह्मव्यतिरिक्तजडपदार्थाभावात्स तथोक्तः । किं कदाचित् व्युत्थानदशायामाविद्यकसंस्कारलेशवशाद्भिक्षाटनादिव्यवहारेण द्वयं पश्यन्नपि समाध्यभ्याससामर्थ्यवशाददद्वयत्वेन पश्यति स तथोक्तः यश्च लोकसंग्रहार्थं नित्यादिकर्माणि कुर्वन्नपि आत्मनि कर्तृत्वाभावनिश्चयेन निष्क्रियः कर्मरहितो भवति कर्मफलेन न लिप्यते स जीवन्मुक्तो नात्र संशयः कर्तव्य इत्यर्थः ॥९७॥

(भा० टी०) जिस प्रकार साधारण पुरुष इन्द्रजाल के पदार्थों को देखकर विचार करता है। कि ये इन्द्रजालके पदार्थ प्रकृत दृश्यमान पदार्थ नहीं हैं। उसी प्रकार जीवन्मुक्त पुरुष जाग्रदवस्था में रुधिर, मांस, विष्ठा, मूत्रादिकों का भाण्ड ऐसे शरीर द्वारा, अन्धापन, बहिरापन इत्यादि दोषों का भाण्ड ऐसे इन्द्रियों के द्वारा, और भूख, प्यास, शोक, मोह इत्यादि भाण्ड ऐसे अन्तःकरण द्वारा, पहिली वासना से उत्पन्न हुए ज्ञान के विरोधी सञ्चित कर्मों का फल भोगने के अनन्तर दृश्यमान यह जगत् सत्य वस्तु नहीं होता है। इस प्रकार विचार करता है। इस विषय में श्रुतिका भी प्रमाण है-"जीवन्मुक्त पुरुष बाह्य वस्तु में नेत्रयुक्त होकर नेत्रहीन कासा व्यवहार करता है, कर्ण होने पर भी बधिर कासा व्यवहार करता है, मन होने पर भी मनोहीन कासा व्यवहार करता है, और प्राण होने पर भी प्राण रहित के सा व्यवहार करता है।" और जगह भी कहा है-" जाग्रत् अवस्था में सुषुप्ति की तरह बाह्य वस्तु में व्यवहार करता है जो द्वैत वस्तु को भी अद्वैत बोले है और जो कर्म करता हुआ भी अन्तःकरण को निष्क्रिय माने है वह ब्रह्मपरायण पुरुष निश्चय करके जीवन्मुक्त है। उससे अन्य को जीवन्मुक्त नहीं कहे हैं।।९७।।

**अस्य ज्ञानात्पूर्वं विद्यमानानामेवाहारविहारादीनाम् अनुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति शुभाशुभयोरौदासीन्यं वा । तदुक्तम्-"बुद्धवाद्वैतमतत्त्वस्य यथेष्टाचरणं यदि । शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षणे- ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥" इति ॥९८॥**

(सं० टी०) नन्वस्य जीवन्मुक्तस्य योगीश्वरस्य मम पुण्यं पापं च नास्तीत्यभिमानवशाद्यथेष्टाचरणप्रसंगमाशंक्य परिहरति । अस्येति । अस्य पूर्वोक्तजीवन्मुक्तस्य ज्ञानात्प्रागेव शांत्यादिगुणैरशुभवासनाया निवारितत्वात्संसारदशायामप्रयत्नेनाहारादिप्रवृत्तिवत् तत्त्वज्ञानोत्तरमपि शुभानामेव वासनानामनुवृत्तिर्भवति नाशुभानामित्यर्थः । ननु शुभवासनानुत्तेरपि प्रयोजनाभावत्किं तदनुवृत्त्येत्यत आह । शुभाशुभयोरिति । तस्माज्जीवन्मुक्तस्य यथेष्टाचरणप्रसंगो नास्तीति भावः । अस्मिन्नर्थे ग्रन्थांतरं संवादयति । तदुक्तमिति । जीवन्मुक्तस्य ब्रह्मज्ञानत्वाभिमानो नास्तीत्यत्रापि संमतिमाह । ब्रह्मवित्त्वमिति । ननु विदुषां यथेष्टाचरणप्रसंगो नास्तीत्युक्तं तदनुपपन्नम् । न मातृवधेन न पितृवधेन "यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते । हत्वापि स इमाँल्लोकान्न हंति न निबध्यते ।।" इति । "हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि । परमात्मविन्न पुण्यैर्न च पापैर्लिप्यते मनुजः ।। अश्वमेधसहस्राणि ब्रह्महत्याशतानि च । कुर्वन्नपि न लिप्येत यद्येकत्वं प्रपश्यति ।। समयादभयं प्राप्तस्तदयं यतते च यः ।। स पुनः समयं गंतुं स्वतंत्रश्चेन्न हीच्छति । आरब्धकमे नानात्वाद् बुधानामन्यथान्यथा । वर्तनं तेन शास्त्रार्थे विभ्रांतव्यं न पंडितैः" इत्यादिश्रुतिस्मृत्यभियुक्तवाक्यैर्विदुषां यथेष्टाचरणत्वांगीकारादितिचेत्सत्यम् । तेषां च वचनानां विद्वत्स्तुतिपरत्वेन तत्कर्तव्यमित्यत्र तात्पर्याभावात् । तदुक्तामाचार्यैः "अधर्माज्जायतेऽज्ञानं यथेष्टाचरणं ततः ।। धर्मकार्ये कथं तत्स्याद्यत्र धर्मो विनश्यति" इति ।।९८।।

**(भा० टी०) इस पूर्वोक्त जीवन्मुक्त को ज्ञान होने के प्रथम ही शमदमादि के गुणों करके अशुभवासना का नाश हो जाने से भी संसारदशा में जैसी आहार विहार आदिकों में अभिमान रहित होकर प्रवृत्ति की जाती है, इसी ही रीति से तत्त्व ज्ञान होने के पश्चात् भी आहार विहार आदिकों में प्रवृत्ति होती है। परंतु तत्त्वज्ञान होने के पश्चात् अशुभ वासना की प्रवृत्ति बिलकुल होती नहीं, केवल शुभ वासनाओं का ही अनुवर्तन किया जाता है। अथवा शुभ वासना तथा अशुभ वासना इन दोनों में भी उदासीन भाव रहता है इससे जीवन्मुक्त हुआ पुरुष यथेच्छ आचरण करता नहीं, यह सिद्ध हुआ। इस विषय में ग्रन्थांतर का यह प्रमाण है कि,-"जो कोई पुरुष एक ब्रह्मतत्त्व को जानले और यथेच्छ आचरण करे तो फिर अपवित्र पदार्थ के भक्षण में लगा हुआ कुत्ता और वह ब्रह्म तत्त्ववेत्ता इन दोनों में भेद कौनसा रहा?" और जो जीवन्मुक्त है उसको अपने ब्रह्मज्ञपने का अभिमान ही रहता नहीं। इसमें प्रमाण यह है कि-"ब्रह्मवेत्तापना को प्राप्त होकर भी जीवन्मुक्त पुरुष अपने आत्मा को केवल जानता है, दूसरा कुछ जानता नहीं, अभिमान भी करता नहीं" इति।।९८।।**

**तदानीममानित्वादीनि ज्ञानसाधनानि अद्वेष्टृत्वादयश्चालंकारवदनुवर्तन्ते । तदुक्तं-" उत्पन्नात्मावबोधस्य**

**ह्यद्वेष्टृत्वादयो गुणाः ॥ अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ॥" इति ॥९९॥**

(सं० टी०) नन्वेवम् "अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम्" इत्यादिस्मृत्युक्तसाधनस्य "अद्वेष्टा सर्वभूतानाम्" इत्यादिवचनैः प्रतिपाद्यमानाद्द्वेष्टृत्वादिगुणसमूहस्य च विदुषां संपाद्यमानत्वश्रवणात्तेन सहविरोधमाशंक्य अमानित्वादिसंपादनस्य विविदिषा संन्यासविषयत्वाद्विदुषां तु लक्षणत्वेनालंकारवदनुवर्तमानान्नाविरोध इत्याह । तदानीमिति । जीवन्मुक्तावस्थायामित्यर्थः । अस्मिन्नर्थे वार्तिकसंमतिमाह । तदुक्तमिति । अस्य विद्वत्संन्यासिनो जीवन्मुक्तस्याद्वेष्टृत्वादयो गुणाः अप्रयत्नेन स्वत एव भवंति । न तु साधनरूपिणः, तं प्रति ते साधनरूपा न भवंति तत्र हेतुमाह । उत्पन्नेति । यत उत्पन्नात्मावबोधोब्रह्मात्मैकत्वनिश्चयरूपः ततः तस्य ते गुणाः लक्षणत्वेनैव भवंतीत्यन्वयः ॥९९॥

(भा० टी०) **उस जीवन्मुक्त अवस्था में अमानीपना, अदंभीपना आदिक ज्ञानसाधन, अद्वेष्टृत्व, निर्लोभत्व, अमात्सर्य, अहिंसा आदिक सद्गुण, अलंकार सरीखे उस तत्त्वज्ञानी के पीछे पीछे चले आते हैं, इस विषय में वार्तिकग्रंथ में यह प्रमाण है कि,–"जिसको आत्मबोध उत्पन्न हुआ है, उस पुरुष को अद्वेष्टृत्व अदंभित्व, अहिंसा आदिक गुण विना यत्न से ही हो जाते हैं, परंतु वे गुण उसके साधनरूपी होते नहीं" इति ॥९९॥**

**किं बहुना अयं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणान्यारब्धफलान्यनुभवन्नन्तःकरणाभासादीनामवभासकः सन् तदवसाने प्रत्यगानंदपरब्रह्मणि प्राणे लीने सति अज्ञानतत्कार्यसंस्काराणामपि विनाशात् परमकैवल्यमानन्दैकरसमखिलभेदप्रतिभासरहितमखण्डं ब्रह्मावतिष्ठते । "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते विमुक्तश्च विमुच्यते" इत्येवमादिश्रुतेः ॥१००॥ इति वेदान्तसारः समाप्तिमितः ॥**

(सं० टी०) इयता प्रबंधेन प्रतिपादितेऽस्मिन्वेदांतसाराख्ये ग्रन्थे श्रीमत्परमगुरुपरहंसपरिव्राजकाचार्यसदानन्दयोगीन्द्रेण महापुरुषेणाथ वेदांतो नामेत्यारभ्य साधनचतुष्टयसंपन्नस्य प्रमातुरधिकारिणः मूलाज्ञाननिवृत्तिपरमानंदप्राप्तिसिद्धये प्रतीयमानाविद्यकसकलप्रपंचजातस्य ब्रह्मण्यध्यारोपापवादपुरः सरं सविस्तरं निष्प्रपंचत्वं प्रतिपाद्य तत्साधनं च श्रवणादिकं सप्रपंचमभिधाय तस्यैवाधिकारिणः तत्त्वमस्यादिवाक्यश्रवणानंतरं ब्रह्मात्मैकत्वसाक्षात्कारेण निरस्तसमस्तभेदबुद्धेः जीवन्मु-

क्तत्वं प्रदर्शितम् । एतावतैव कार्यसिद्धिः किं बहुलेखनेनेति मनसि निधाय संप्रत्यस्यैव जीवन्मुक्तस्य स्वप्रकाशात्मानंदानुभवैकनिष्ठस्य भेदप्रतीत्यभावेऽपि अविद्यालेशवशात्प्रारब्धकर्म भुंजानो भिक्षाटनादिदेहयात्रामात्रक्रियावशिष्टो ब्रह्मभूत एवावतिष्ठत इत्युपसंहरति । किं बहुना इत्यादिना । प्रारब्धफलं त्रिविधं स्वेच्छाकृतं परेच्छाकृतम् अनिच्छाकृतं चेति । तत्र व्युत्थानदशायामीश्वरप्रेरिततया स्वकीयेच्छया कृतं स्वेच्छाकृतं भिक्षाटनादिसमाध्यवस्थायां शिष्यादिभिर्दीयमानमन्नादिकं परेच्छाकृतम् । समाध्यवस्थायां व्युत्थानदशायां वा आकाशफलपातवदकस्माज्जायमानं पाषाणपतनकंटकवेधादिकमनिच्छाकृतम् । स चायं जीवन्मुक्तः प्रोक्तत्रिविधप्रारब्धप्रापिकं सुखदुःखमनुभवन्बुद्ध्यादिसाक्षितया सर्वावभासकः सन्भोगेनारब्धकर्म्मक्षये सति प्रत्यगभिन्नपरमात्मनि प्राणादिलयानंतरं प्रनष्टाविद्यकससंसारः कृतकृत्यः सन् गलितमकलभेदप्रतिभासो ब्रह्मैवावतिष्ठते इति सकलवेदरहस्यतात्पर्यमित्यर्थः । अयं जीवन्मुक्तो बुद्ध्याद्युपाधिविलये सति घटाद्युपाधिविनिर्मुक्ताकाशवन्मुक्त इत्युपचारव्यवहारभाग्भवति बद्धत्वस्याप्यवास्तवत्वात् । तदुक्तमाचार्यैः "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता।" अस्य जीवन्मुक्तस्योपाधिविगमसमये प्राणाख्यं लिंगशरीरम् अतितप्तलोहक्षिप्तनीरबिंदुवत्प्रत्यगभिन्नपरमानंदे लीनत्वात्स्थूलशरीरं नोत्तिष्ठीतीति । अत्र श्रुतिमाह । न तस्येति । अय जीवन्मुक्तो जीवन्नेव दृश्यमानाद्रागद्वेषादिबंधनाद्विशेषेण मुक्तः सन् वर्तमानदेहपाते सति भाविदेहबंधाद्विशेषेण मुच्यत इत्यत्रापि श्रुतिमाह। विमुक्तश्चेति । बृहदारण्यकेऽपि "यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति । वासिष्ठेऽपि "जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते । भवत्यदेहमुक्तत्वं पवनोस्पंदतामिव" इति "असंगो ह्ययं पुरुष आकाशवत्सर्वगतश्च नित्यः । अस्नाविरं शुद्धमपापविद्धम्" इत्यादिश्रुत्या प्रत्यगात्मनो नित्यत्वपरिपूर्णत्वकूटस्थत्वश्रवणात् उत्पत्त्याप्तिविकृतिसंस्कारचतुर्विधक्रियाफलविलक्षणत्वेन विद्यया नित्यानिवृत्ताविद्यामात्रेण प्राप्त एवात्मा पुनः प्राप्त एवेत्युपचर्य अधिष्ठानस्य गमनाभावेऽध्यस्तस्य लोकांतरगमनायोगान्न सालोक्यादिमुक्तिसंभवः । नन्वप्राप्तस्य क्रियासाध्यस्य वस्तुनो विद्यमानानर्थनिवृत्तेश्च पुरुषार्थत्वं दृष्टम् अत्र तदभावात्कथं पुरुषार्थत्वमिति चेत् न, तयोरेव पुरुषार्थत्वमिति नियमाभावात् । स्वच्छायायामारोपितरेक्षसा विस्मृतकण्ठगतचामीकरस्य भ्रांतपुरुषस्याप्तवाक्येन तयोर्निवृत्त्या तयोरपि पुरुषार्थत्वदृष्टेः।अत्र संग्रहः"आत्माज्ञानमलं निरस्तममलं प्राप्तं च तत्त्वं परं कंठस्थाभरणादिवद् भ्रमवशाच्छायापिशाची यथा । आप्तोकत्याप्तिनिवृत्तिवच्छ्रुतिशिरोवाक्याद्गुरोरुत्थिताद्ध्वस्तध्वांतनिरासतः परसुखं प्राप्तं तयोरुच्यते" इति । न च मुक्तानामपि वसिष्ठभीष्मप्रभृतीनामपरोक्ष-

ज्ञानिनां पुनर्देहांतरश्रवणात्केवलं ज्ञानोत्पत्तिसमय एवाल्पज्ञानिनामस्माकं मुक्तिर्भवतीति कथं विश्वसिम: अतो ज्ञानव्यतिरिक्तमप्युपायान्तरं किंचित्कर्तव्यमिति वाच्यम् । शास्त्रप्रामाण्यादेव तदुपपत्ते: । "ब्रह्मविद्ब्रह्मैव भवति । तरति शोकमात्मवित्" इत्यादि श्रुतिभिर्ज्ञानोत्पत्तिसमय एव मुक्तिप्रतिपादनात् । तदुक्तं शेषेण "तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् । ज्ञानसमकाले मुक्त: कैवल्यं याति हतशोक:" इति । वासष्ठादीनां त्वधिकारिकपुरुषत्वेन यावदधिकारं प्रारब्धवेगप्रयुक्तशापादिना स्वीकृतावांतरदेहपातेऽपि तद्देहभाविभोगस्य निवारयितुमशक्यत्वात् प्रारब्धस्य विना भोगेन क्षयानुपपत्ते: यावदधिकारमवस्थितिरधिकारिणामिति भगवद्व्यासैर्विशेषितत्वात् । अस्मदादीनां च प्रारब्धकर्मणोऽनेकदेहारंभकत्वसंभवेऽपि चरमदेहं विनाऽपरोक्षज्ञानोत्पत्तेरसंभवात् वामदेवे तथा दृष्टत्वात् । अन्यथा गर्भस्थस्य श्रवणाद्यभावेन ज्ञानोत्पत्त्यनुपपत्ते: । ननु ज्ञानिनामपि स्वप्नावस्थायां देहांतरस्वीकारवन्मुक्तानामपि पुनर्देहांतरस्वीकार: किं न स्यादिति चेत् । न । "कंठे स्वप्ने समाविशेत्" इत्यादिवाक्येषु कंठान्निर्गमनाभावश्रवणोद्देहांतरप्राप्तेस्तु "तदनंतरप्रतिपत्तो" इत्यत्र देहान्निर्गमनश्रवणाद्वैषम्यम् ।तदुक्तं स्कांदे "यस्मिन्देहे दृढं ज्ञानमपरोक्षं विजायते । तद्देहपातपर्यंतमेव संसारदर्शनम् ।। पुरापि नास्ति संसारदर्शनं परमार्थत:।कथं तद्दर्शनं देहविनाशादूर्ध्वमुच्यते ।। तस्माद्ब्रह्मात्मविज्ञानं दृढं चरमविग्रहे । जायते मुक्तिदं ज्ञानं प्रसादादेव मुच्यते" इति । तस्मात्सुष्ठूक्तं "विमुक्तश्च विमुच्यते" इति ।। नित्यशुद्धपरिपूर्णमद्वयं सच्चिदानन्दात्मकमखंडमक्षरम् सर्वदासुखमबोधतत्कृतैर्वर्जितं संदहमस्मि तत्परम् ।। गोवर्द्धनोद्धरणप्रेरणया विमुक्तक्षेत्रे पवित्रे नरसिंहयोगी । वेदान्तसारस्य चकार टीकां सुबोधिनीं विश्वपते: पुरस्तात् ।। जाते पंचशताधिके दशशते संवत्सराणां पुन: सञ्जाते दशवत्सरे प्रभुवरश्रीशालिवाहे शके । प्राप्ते दुर्मुखवत्सरे शुभशुचौ मासे नवम्यां तिथौ प्राप्ते भार्गववासरे नरहरिष्टीकां चकारोज्ज्वलाम् ।। इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमद्रामानंदभगवत्पूज्यपादशिष्यनृसिंहसरस्वतीविरचिता वेदान्तसारस्य टीका समाप्ता ।।१००।।

**(भा० टी०) बहुत कहने से क्या होगा? यह जीवन्मुक्त पुरुष शरीर यात्रा के निर्वाह के अर्थ इच्छा, अनिच्छा और परेच्छा इन तीन प्रकार के प्रारब्ध कर्मों से उत्पन्न हुए सुख दु:ख का अनुभव करता हुआ साक्षी चैतन्य रूप बुद्धि आदि का प्रकाशक होता हुआ प्रारब्ध कर्मों में भोग के अन्त में सच्चिदानन्दरूप परब्रह्म में प्राणों के लीन होने पर अज्ञान और अज्ञान के कार्य स्वरूप पूर्व संसार के विनाश का हेतु परम कैवल्यरूप सच्चिदानन्दमय अद्वैत पूर्णब्रह्ममें अवस्थित होकर अनिर्वचनीय कैवल्यानन्द का भोग करता है। इस विषय में प्रमाण भी है-"जीवन्मुक्त पुरुष के देह**

का त्याग करने पर सम्पूर्ण अन्यलोकों को नहीं जाते हैं। उसी सच्चिदानन्दमय परब्रह्म में लीन हो जाते हैं और असार संसार के बन्धन से छूटकर परम ब्रह्मानन्द में निमग्न हो जाते हैं"॥१००॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीसदानन्दयोगीन्द्रविरचितं
वेदान्तसारप्रकरणं रामपुरवास्तव्य-त्रिवेदभोलानाथा-
त्मजरामस्वरूपविरचितस्वरूपप्रकाशभाषा-
सहितं समाप्तिमगमत्

पुस्तके मिलने के स्थान :–

खेमराज श्रीकृष्णदास
श्रीवेंकटेश्वर प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
७वीं खेतवाडी, खम्बाटा लेन,
बम्बई–४०० ००४

गंगाविष्णु श्रीकृष्णदास,
लक्ष्मीवेंकटेश्वर प्रेस व बुक डिपो
अहिल्याबाई चौक, कल्याण
(जि० ठाणे–महाराष्ट्र)

खेमराज श्रीकृष्णदास, चौक–वाराणसी (उ० प्र०)

हमारे यहां से प्रकाशित तीन सहस्र ग्रन्थों की जानकारी के लिये बृहत्सूचीपत्र मुफ्त मंगा देखिये।


मुद्रक व प्रकाशकः-

गङ्गाविष्णु श्रीकृष्णदास,

अध्यक्ष-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,

कल्याण-बम्बई.

